कारिकावली with
सिद्धांत मुक्तावली of
विश्वनाथ न्यायपञ्चानन भट्टाचार्य
Pub. & Ed. by रामकृष्ण मिश्र
Loose leaves litho print edn.
Benares, 1935 Vikram era



सि॰मु॰ श्रीगणेशाय नमः ॥ चूडामणीकृतविधुर्वलयीकृतवासुकिः ॥ भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥ निजनिर्मितकारिकावलीम
१ तिसंक्षिप्तचिरंतनोक्तिभिः ॥ विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥ २ ॥ सद्रव्या गुणगुंफिता सुकृतिनां सत्कर्मणा ज्ञा
पिता सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ॥ विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धांतमुक्तावली विन्यस्ता मनसो मुदं
वितनुतां सद्युक्तिरेषा चिरं ॥ ३ ॥ विघ्नविघाताय कृतं मंगलं शिष्यशिक्षायै निबध्नाति ॥ नूतनेत्यादि ॥ ननु मंगलं न विघ्नध्वंसं प्रति
न वा समाप्तिं प्रति कारणं ॥ विनापि मंगलं नास्तिकादीनां ग्रंथे निर्विघ्नपरिसमाप्तिदर्शनादिति चेन्न ॥ अविगीतशिष्टाचारविषयत्वेन
मंगलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां संभवति दृष्टफलकत्वे अदृष्टकल्पनाया अन्याय्यत्वादुपस्थितत्वात्समाप्तिरेव फलं क

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ॥

ल्प्यते ॥ इत्थं च यत्र मंगलं न दृश्यते तत्रापि जन्मांतरीयं तत्कल्प्यते ॥ यत्र च सत्यपि मंगले समाप्तिर्न दृश्यते तत्र च बलवत्तरो विघ्नो
विघ्नप्राचुर्यं वा बोध्यं ॥ प्रचुरतरस्यास्येव बलवत्तरविघ्ननिवारणे कारणत्वं बोध्यं ॥ विघ्नध्वंसस्तु मंगलस्य द्वारमित्याहुः ॥ नव्यास्तु वि
घ्नध्वंस एव मंगलस्य फलं ॥ समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात् ॥ न च स्वतःसिद्धविघ्नविरहवता कृतस्य मंगलस्य निष्फलत्वा
पत्तिरिति वाच्यं ॥ इष्टापत्तेः ॥ विघ्नशंकया तदाचरणात् ॥ तथैव शिष्टाचारात् ॥ न च तस्य निष्फलत्वे शिष्टाचारानुमिततद्बोधकवेदस्या
प्रामाण्यापत्तिरिति वाच्यं ॥ सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात् ॥ अत एव पापभ्रमेण कृतप्रायश्चित्तस्य निष्फलत्वेऽपि न वेदाप्रामा राम॰
ण्यं ॥ मंगलं तु विघ्नध्वंसविशेषे कारणं ॥ विघ्नध्वंसविशेषे च विनायकस्तवपाठादिः ॥ क्वचिच्च विघ्नात्यंताभाव एव समाप्तिसाधनं ॥ १

प्रतिबंधकसंसर्गाभावस्यैव कार्यजनकत्वात् ॥ इत्थं च नास्तिकादिकृतग्रंथेषु जन्मांतरीयमंगलजन्यदुरितध्वंसः स्वतःसिद्धविघ्नात्यंता
भावो वास्तीति न व्यभिचार इत्याहुः ॥ संसारेति ॥ संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः ॥ एतेन ईश्वरे प्रमाणं दु
र्शितं भवति ॥ तथा हि ॥ यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यंकुरादिकमपि ॥ न च तत्कर्तृत्वमस्मदादीनां संभवतीति तत्कर्तृत्वेने
श्वरसिद्धिः ॥ न च शरीराजन्यत्वेन कर्तृजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यं ॥ अप्रयोजकत्वात् ॥ मम तु कर्तृत्वे न कार्यत्वेन ---
--- कार्यकारणभाव एवानुकूलस्तर्कः ॥ द्यावाभूमी जनयन् देव एक इत्यादय आगमा अप्यनुसंधेयाः ॥ द्रव्यं गुणा इत्यादि ॥ अत्र सप्तम
स्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं ॥ तेन भावत्वेन पृथगुपन्यासो न कृतः ॥ एते च पदार्था वैशेषिकसिद्धाः नैयायिकानामप्यविरु

तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥ द्रव्यं गुणास्तथा कर्म्म
सामान्यं सविशेषकम् ॥ समवायस्तथाभावः पदार्थाः सप्त कीर्तिताः २

द्धाः ॥ प्रतिपादितं चैवमेव भाष्ये ॥ अत एवोपमानचिंतामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यस्यातिरिक्तपदार्थत्वमाशंकितं ॥ ननु कथ
मेत एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात् ॥ तथा हि ॥ मण्यादिसमवहिते न वह्निना दाहो न जन्यते ॥ तच्छून्ये न तु जन्य
ते तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते ॥ उत्तेजकेन मण्याद्यपसरणे न च जन्यत इति कल्प्यते ॥ एवं सादृश्यमप्यतिरिक्तः
पदार्थस्तद्भिन्नषट्सु भावेषु अंतर्भवति ॥ सामान्येपि सत्त्वात् ॥ यथा गोत्वं नित्यं तथाश्वत्वमपीति सादृश्यप्रतीतेः ॥ नाप्यभावे सत्त्वे
न प्रतीयमानत्वादिति चेन्न ॥ मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति मण्यभावादेरेव वा स्वातंत्र्येण हेतुत्वं कल्प्यते ॥ अनेनैव सा

ननु कार्यत्वावच्छिन्नं प्रति समवायसम्बन्धेन द्रव्यं कारणमतोऽत्र कार्यसमवायि द्रव्यमिति न वाच्यं समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यत्वानि सदिताकारणतापत्तिविच्छिन्ना कारणतात्वात् यत्त्वावच्छिन्न कार्यता निरूपितत्वावच्छि ...कारणतावत् इत्यनुमानेन ... ति सिद्धः ५

सि॰मु॰ २ मंजस्येअनंतशक्तितत्प्रागभावप्रध्वंसकल्पनानौचित्यात्॥ नचोत्तेजके सतिप्रतिबंधकसद्भावेपिकथंदाह इतिवाच्यं॥उत्तेजकाभाव विशिष्टमण्यभावस्यहेतुत्वात्॥ एवंसादृश्यमपिनपदार्थांतरं॥ किंतुतद्भिन्नत्वेसतितद्गतभूयोधर्मवत्त्वं॥ यथाचंद्रभिन्नत्वेसतिचं द्रगताल्हादकत्वादिमत्वंमुखेचंद्रसादृश्यमिति॥द्रव्याणिविभजते॥क्षित्यवितिः॥ क्षितिः पृथ्वीवी आपोजलानि तेजोवह्निःमरुद्व्योम कालःसमयः दिक्दिशादेहीआत्मामनइंद्रियं॥एतानिनवद्रव्याणीत्यर्थः॥ननुद्रव्यत्वजातौकिंप्रमाणं॥नहितत्रप्रत्यक्षंप्रमाणं॥घृ

तजतुप्रभृतिषुद्रव्यत्वाग्रहादितिचेन्न॥कार्यसमवायिकारणतावच्छेदकतयासंयोगस्यविभागस्यवासमवायिकारणतावच्छेदकतयात्त

क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनोमनः॥द्रव्याण्यथगुणारूपंरसोगंधस्ततःपरं॥३॥स्पर्शःसंख्यापरिमितिःपृथ क्त्वञ्चततःपरम्॥संयोगश्चविभागश्चपरत्वञ्चापरत्वकम्॥४॥बुद्धिःसुखंदुःखमिच्छाद्वेषोयत्नोगुरुत्वकम्॥द्रवत्वं स्नेहसंस्कारावदृष्टंशब्दएवच॥५॥उत्क्षेपणंततोपक्षेपणमाकुंचनन्तथा॥प्रसारणंचगमनंकर्माण्येतानिपंचच॥६॥

त्सिद्धेः॥ननुदशमंद्रव्यंतमःकुतोनोक्तं॥तद्धिप्रत्यक्षेणगृह्यते।तस्यचरूपवत्वात्कर्मवत्वाच्च॥तच्चगंधशून्यत्वान्नपृथिवी॥नीलरूपवत्वा न्नजलादिकं॥तत्प्रत्यक्षेचालोकनिरपेक्षंचक्षुःकारणमितिचेन्न॥आवश्यकतेजोभावेनैवोपपत्तौद्रव्यांतरकल्पनायाअन्याय्यत्वात्॥रूप वत्ताप्रतीतिस्तुभ्रमरूपा॥कर्मवत्ताप्रतीतिरपिआलोकापसरणौपाधिकीभ्रांतिरेव॥तमसोऽतिरिक्तत्वेऽनंतावयवादिकल्पनागौरवंचस्या त्॥सुवर्णस्ययथातेजस्यंतर्भावस्तथाग्रेवक्ष्यते॥गुणान्विभजते॥अथगुणाइति॥एतेगुणाश्चतुर्विंशतिसंख्याकाःकणादेनकंठतश्चशब्दे नचदर्शिताः॥तत्रगुणत्वजातिसिद्धिरग्रेवक्ष्यते॥कर्माणिविभजते॥उत्क्षेपणमिति॥कर्मत्वजातिस्तुप्रत्यक्षसिद्धा॥एवमुत्क्षेपणत्वादिकमपि॥ राम २

सामान्यलक्षणं ... नित्यम

ननु भ्रमणादिकमपि कर्माधिकं तत्कुतो नोक्तमत आह ॥ भ्रमणमिति ॥ सामान्यं निरूपयति ॥ सामान्यमिति ॥ तल्लक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वं ॥ अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं नित्यत्वे सतीति ॥ नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेकेति ॥ नित्यत्वे सत्यनेकवृत्तित्वं अत्यंताभावस्याप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमुक्तं ॥ एकमात्रव्यक्तिवृत्तिस्तु न जातिः ॥ तथा चोक्तं ॥ व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः ॥ रूपहानिरसंबंधो जातिबाधकसंग्रहः ॥ द्रव्यादीति ॥ परत्वमधिकदेशवृत्तित्वं ॥ अपरत्वं अल्पदेशवृत्तित्वं ॥ सकलजात्यपेक्षया अधिकदेशवृत्तित्वात्सत्तायाः परत्वं ॥ एतद्बोधनायैव द्रव्यादित्रिक

एकत्वमभेदः परत्वकस्यधत्वायोयैथा

भ्रमणं रेचनं स्यन्दनोर्द्ध्वज्वलनमेव च ॥ तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥ सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ॥ द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥ परभिन्ना तु या जातिः सैवापरतयोच्यते ॥ द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥ व्यापकत्वात्पराऽपि स्याद्व्याप्यत्वादपराऽपि च ॥ अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥

वृत्तिरिति उक्तं ॥ तदपेक्षया चान्यासां जातीनामपरत्वं परभिन्ना ॥ सत्ताभिन्ना ॥ व्यापकत्वादिति ॥ पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वात्परत्वं ॥ सत्तापेक्षया व्याप्यत्वादल्पदेशवृत्तित्वाद्द्रव्यत्वस्यापरत्वं ॥ तथा च धर्मद्वयसमावेशादुभयमविरुद्धं ॥ विशेषं निरूपयति । अन्त्य इति ॥ अंते अवसाने वर्तत इत्यन्त्यः यदपेक्षया विशेषो नास्तीत्यर्थः ॥ घटादीनां द्व्यणुकपर्यंतानां तत्तदवयवभेदात्परस्परम्भेदः ॥ परमाणूनां परस्परभेदको विशेष एव ॥ स तु स्वत एव व्यावृत्तः ॥ तेन तत्र विशेषांतरापेक्षा नास्तीत्यर्थः ॥ ॥



सि॰मु॰ समवायंदर्शयति॥घटादीनामिति।।अवयवावयविनोः गुणगुणिनोः जातिव्यक्त्योः क्रियाक्रियावतोः नित्यद्रव्यविशेषयोश्च यः संबंधः स
३ समवायः समवायत्वंनित्यसंबन्धत्वं।।तत्रप्रमाणंतुगुणक्रियादिविशिष्टबुद्धिः।।विशेषणविशेष्यसंबन्धविषया।। विशिष्टबुद्धित्वात्।।
दंडीपुरुषइतिविशिष्टबुद्धिवत्।।इत्यनुमानेनसंयोगादिबाधात्समवायसिद्धिः।।नचस्वरूपसंबन्धेनसिद्धसाधनमर्थांतरंवा।।अनेक
स्वरूपाणांसंबन्धत्वकल्पनेगौरवात् लाघवादेकसमवायसिद्धिः।।नचसमवायस्यैकत्वेवायौरूपवत्ताबुद्धिप्रसंगः।।तत्ररूपसमवा
यसत्वेपिरूपाभावात्।। नन्वेवमभावस्यापिवैशिष्ट्यंसंबंधांतरंसिध्येदितिवाच्यम्।।तस्यनित्यत्वेभूतलेघटानयनानंतरमपिघटाभा

घटादीनांकपालादौद्रव्येषुगुणकर्मणोः।।तेषुजातेश्चसम्बन्धःसमवायःप्रकी
र्तितः॥११॥अभावस्तुद्विधान्योन्यसंसर्गाभावभेदतः ॥ ० ॥ ० ॥

वबुद्धिप्रसंगात्॥ घटाभावस्यतत्रसत्वात्।।तस्यनित्यत्वात्।।अन्यथादेशांतरेपिघटाभावबुद्धिर्नस्यात्।। वैशिष्ट्यस्यचतत्रस
त्वात्।। ममतुघटेपाकरक्ततादशायांश्यामरूपस्यनष्टत्वान्नतद्वत्ताबुद्धिः।। वैशिष्ट्यस्यानित्यत्वेत्वनंतवैशिष्ट्यकल्पनेतवैव
गौरवं।। इत्थंचतत्तत्कालीनंतत्तद्भूतलादिकंतत्तदभावानांसंबंधः॥११॥ अभावंविभजते।।अभावस्त्विति।। अभावत्वंद्रव्यादि
षट्कान्योन्याभाववत्त्वं।अन्योन्यसंसर्गेति।।अन्योन्याभावसंसर्गाभावभेदादित्यर्थः अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावा
त्संसर्गाभावंविभजते॥ राम॰ ३

घटोभविष्यति १ घटोनष्टः २ घटोनास्ति २ घटोनपटः १

॥प्रागभावेति॥संसर्गाभावत्वंअन्योन्याभावभिन्नाभावत्वं॥अन्योन्याभावत्वंतादात्म्यसंबंधावच्छिन्नप्रतियोगिताकाभावत्वं॥विनाश्यभावत्वंप्रागभावत्वं॥जन्याभावत्वंध्वंसत्वं॥नित्यसंसर्गाभावत्वमत्यंताभावत्वं॥यत्रतुभूतलादौघटादिकमपसारितंपुनरानीतंचतत्रघटकालस्यसंबंधाघटकत्वादत्यंताभावस्यनित्यत्वेपिनघटकालेघटात्यंताभावबुद्धिः॥तत्रोत्पादविनाशशालीचतुर्थोयमभावइतिकेचित्॥अत्रध्वंसप्रागभावयोरधिकरणेनात्यंताभावोवर्ततइतिप्राचांमतं॥श्यामघटेरक्तोनास्तिरक्तघटेश्यामोनास्तीतिप्रतीतिश्चप्रागभावंध्वंसंचावगाहते नतुतदत्यंताभावं॥नव्यास्तुतत्रविरोधेमानाभावात् ध्वंसादिकालावच्छेदेनात्यंताभावोवर्ततइत्या

प्रागभावस्तथाध्वंसोप्यत्यंताभावएवच॥१२॥एवंत्रैविध्यमापन्नःसंसर्गाभावइष्यते॥

सप्तानामपिसाधर्म्यंज्ञेयत्वादिकमुच्यते॥१३॥

हुः॥नन्वभावानामधिकरणात्मकत्वंलाघवादितिचेन्न॥अनंताधिकरणात्मकत्वापेक्षयाअतिरिक्तकल्पनायाएवलघीयस्त्वात्॥एवंचाधाराधेयभावोप्युपपद्यते॥एवंतत्तच्छब्दगंधरसाद्यभावानांप्रत्यक्षत्वमप्युपपद्यते॥अन्यथातत्तदधिकरणानांतत्तदिंद्रियाग्राह्यत्वात्प्रत्यक्षत्वंनस्यात्॥एतेनज्ञानविशेषकालविशेषात्मकत्वंअभावस्येतिप्रत्युक्तं॥अप्रत्यक्षत्वापत्तेः॥१२॥इदानींपदार्थानांसाधर्म्यंवैधर्म्यंवक्तुमारभते॥सप्तानामिति॥समानोधर्मोयेषांतेसधर्माणस्तेषांभावःसाधर्म्यंसमानोधर्मइतिफलितोर्थः॥एवंविरुद्धोधर्मोयेषांतेविधर्माणस्तेषांभावोवैधर्म्यंविरुद्धोधर्मइतिफलितोर्थः॥ज्ञेयत्वंज्ञानविषयता साचसर्वत्रैवास्तिईश्वरज्ञानविषयतायाःकेवलान्वयित्वात्॥एवमभिधेयत्वादिकंबोध्यम्॥१३॥

सि॰मु॰ ॥द्रव्येति॥द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च॥यद्यप्यनेकत्वमभावेप्यस्ति तथाप्यनेकत्वे सति भावत्वं पंचा
४ नां साधर्म्यं॥तथा चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थस्तेन प्रत्येकं घटादौ नाव्याप्तिः॥समवायित्वं समवायसंबंधेन संब
न्धित्वं न तु समवायवत्त्वं सामान्यादावभावात्॥तथा च समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं फलितार्थः।तेन नित्यद्रव्येषु नाव्याप्तिः॥सत्ता
वंत इति॥द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः॥गुणादिरिति॥यद्यपि गुणक्रियाशून्यत्वं आद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वं च गगनादाव
तिव्याप्तम्॥तथापि गुणवद्वृत्तिधर्मवत्त्वं कर्मवद्वृत्तिपदार्थविभाजकोपाधिमत्त्वं तदर्थः॥न हि घटत्वादिकं द्रव्यत्वं वा गुणवद्वृत्ति कर्मव

द्रव्यादयः पंच भावा अनेके समवायिनः॥सत्तावंतस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः॥१४॥सामान्यपरिहीनास्तु स
र्वे जात्यादयो मताः॥पारिमांडल्यभिन्नानां कारणत्वमुदाहृतम्॥१५॥

॰द्वृत्ति वा किंतु गुणत्वादिकं तथा॥आकाशत्वादिकं
तु न पदार्थविभाजकोपाधिः॥सामान्येति॥सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः॥पारिमांडल्येति॥पारिमांडल्यं अणुपरिमाणं
कारणत्वं तद्भिन्नानामित्यर्थः॥अणुपरिमाणं तु न कस्यापि कारणं॥तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारंभकं भवेत्॥तच्च न संभवति॥परि
माणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वात्॥महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसंगात्॥एवं परममहत्परिमाणं
अतींद्रयसामान्यं विशेषाश्च बोध्याः॥मानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वात् परममहत्परिमाणमाकाशादेर्बोध्यम्॥तस्यापि न कारणत्वमि राम॰
त्याचार्याणामाशय इत्यन्ये॥तन्न॥ज्ञानातिरिक्तं प्रति अकारणतायाः एवाचार्यैरुक्तत्वात्॥इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम्।॥ ४

ननु विषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन
विषयः कारणमिति योगिप्रत्यक्षत्वावच्छिन्नविषयताया परि
माणेऽपि पर्यवसिततानाह नेति नोक्तं प्रत्यक्षमपि प्रत्यक्षं

कार्यैकार्थप्रत्यासत्त्या... कारणत्वम् १२

ज्ञायमानसामान्यं न प्रत्यासत्तिः॥ ज्ञायमानं लिंगं नानुमितिकरणमित्यभिप्रायेण बोध्यम् ननु कारणत्वं किमत आह॥ अन्यथासिद्धिशून्यस्येति तस्य
कारणत्वस्य॥ तत्रेति॥ समवायिकारणे आसन्नं प्रत्यासन्नं जनकं द्वितीयं असमवायिकारणमित्यर्थः॥ अत्र यद्यपि तुरीतंतुसंयोगे पटासमवायि
कारणत्वं स्यादेवं वेगादीनामपि अभिघाताद्यसमवायिकारणत्वं स्यात्। एवं ज्ञानादिकमिच्छाद्यसमवायिकारणं स्यात्तथापि पटाद्यसमवायिकारणल
क्षणे तुरीतंतुसंयोगादिभिन्नत्वं देयम्॥ तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रति असमवायिकारणं भवत्येव॥ एवं वेगादिकं वेगसंस्काराद्यसमवायि
कारणं भवत्येवेति॥ तत्तत्कार्यसमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयमेव॥ आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वं नास्ति

अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता॥ कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितं॥ १६॥ समवा
यिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वं॥ एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वं॥ १७॥ यत्समवे
तं कार्यं भवत्यवेहि समवायिजनकं तत्॥ तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात्॥ १८ ॥

तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव॥ अत्र समवायिकारणे प्रत्यासन्नत्वं द्विविधं॥ कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च॥ आद्यं यथा
॥ घटादिकं प्रति कपालसंयोगादिकम्॥ तस्य हि कार्येण घटेन सह एकस्मिन्कपाले प्रत्यासत्तिरस्ति॥ द्वितीयं यथा॥ घटरूपं प्रति कपालरूपमस
मवायिकारणम्॥ तत्र घटरूपं प्रति कारणं घटस्तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति॥ तथा च क्वचित्समवायसंबंधेन क्वचित्स्व
समवायिसमवायसंबंधेनेति फलितोऽर्थः॥ इत्थं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या कारणं ज्ञानादिभिन्नमसमवायिकारणमि
ति सामान्यतो लक्षणं पर्यवसन्नं॥ आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः॥ ॥

सि·मु· इदानीमन्यथासिद्धत्वमेवकियतांपदार्थानांतदाह॥ येनसहेति॥ ॥ कार्यंप्रतिकारणस्यपूर्ववृत्तितायेनरूपेणगृह्यते तत्कार्यंप्रति
५ तद्रूपमन्यथासिद्धमित्यर्थः॥ यथा घटादिकंप्रतिदंडत्वादिकं॥ द्वितीयमन्यथासिद्धमाह॥ कारणमादायवायस्येति॥ यस्यस्वातंत्र्ये
णान्वयव्यतिरेकौनस्तः किंतुकारणमादायान्वयव्यतिरेकौगृह्येते॥ तदन्यथासिद्धं॥ यथा दण्डरूपम्॥ तृतीयमाह॥ अन्यंप्रतीति
॥अन्यंप्रतिपूर्ववृत्तित्वंगृहीत्वैवयस्ययत्कार्यंप्रतिपूर्ववृत्तित्वंगृह्यतेतस्यतत्कार्यंप्रति अन्यथासिद्धत्वम्॥ यथाघटादिकंप्रतिआ
काशस्य तस्यहि घटादिकंप्रतिआकाशत्वेनैवकारणत्वंस्यात्॥ आकाशत्वंच शब्दसमवायिकारणत्वम्॥ एवंचतस्यशब्दंप्रतिकार

येनसहपूर्वभावःकारणमादायवायस्य ॥ अन्यंप्रतिपूर्वभावेज्ञातेयत्पूर्वभा
वविज्ञानं ॥ १९ ॥ जनकंप्रतिपूर्ववर्तितामपरिज्ञायनयस्यगृह्यते ॥ ॥

णत्वंगृहीत्वैवघटादिकंप्रतिजनकत्वंग्राह्यम्॥ अतस्तदन्यथासिद्धम्॥ शब्दाश्रयत्वेनकारणत्वेकान्यथासिद्धिरितिचेत्पञ्च
मीतिगृहाण॥ अथआकाशस्यशब्दंप्रतिजनकत्वेकिमवच्छेदकमिति चेत्क वत्वादिकंविशेषपदार्थोवेति॥ चतुर्थमन्यथासि
द्धमाह॥ जनकंप्रति पूर्ववृत्तितेति॥ यत्कार्यंजनकंप्रति पूर्ववृत्तित्वंगृहीत्वैवयस्ययत्कार्यंप्रति पूर्ववृत्तित्वंगृह्यते तस्यतत्कार्यंप्र
ति अन्यथासिद्धत्वम्॥ यथाकुलालपितुर्घटंप्रति॥ तस्यकुलालपितृत्वेनघटंप्रतिजनकत्वेअन्यथासिद्धिः॥ कुलालत्वेनरूपेण राम·
जनकत्वेत्विष्टापत्तिः॥ कुलालमात्रस्यघटंप्रतिजनकत्वात् ॥ ॥ ५

भिन्नत्वे सति अनेन समवेत सति द्रव्यत्वम् अनेकद्रव्यत्वमित्यर्थः

पंचममन्यथासिद्धमाह॥अतिरिक्तमथापीति॥अवश्यक्लृप्तनियतपूर्ववर्त्तिन एव कार्यसंभवे तद्भिन्नं अन्यथासिद्धमित्यर्थः॥अत एव प्रत्यक्षे महत्त्वं कारणमनेकद्रव्यत्वमन्यथासिद्धम्॥तत्र हि महत्त्वमवश्यक्लृप्तं तेनानेकद्रव्यत्वमन्यथासिद्धम्॥न च वैपरीत्ये किं विनिगमकमिति वाच्यम्॥महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात्॥२०॥२१॥रासभादिः स्यादिति॥यद्यपि तद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववृत्तित्वमस्ति तथापि घटजातीयं प्रति सिद्धकारणभावैर्दंडादिभिरेव तद्घटव्यक्तेरपि संभवे रासभोन्यथासिद्ध इति भावः॥ः ॥एतेष्विति॥ ॥एतेषु पञ्चस्वन्यथासिद्धेषु पञ्चमोन्यथासिद्ध आवश्यकस्तेनैव परेषां चरितार्थत्वात्॥तथाहि॥दण्डादिभिरवश्यक्लृप्तनियतपूर्ववृत्तिभिरेव

अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः॥२०॥ एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम्॥घटादौ दण्डरूपादिर्द्वितीयमपि दर्शितम्॥२१॥तृतीयं तु भवेद्व्योम कुलालजनको परः॥पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ॥२२॥
समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम्॥गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वं॥२३॥अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते॥

कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम्॥न च वैपरीत्ये किं विनिगमकमिति वाच्यम॥दण्डत्वस्य कारणत्वे दण्डघटितपरंपरायाः सम्बन्धत्वकल्पने गौरवात्॥एवमन्येषामप्यनेन चरितार्थत्वं संभवति॥२२॥समवायीति॥ स्पष्टम् ॥ ॥गुणकर्मेति॥असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्यं न तु गुणकर्मणोः॥साधर्म्यमित्यत्रापि तात्पर्यम्। अथवा असमवायिकारणत्ववद्वृत्तिसत्ताभिन्नजातिमत्त्वं तदर्थः॥तेन ज्ञानादीनामसमवायिकारणत्वविरहेपि नाव्याप्तिः॥२३॥अन्यत्र नित्यद्रव्येति॥ नित्यद्रव्याणि परमाण्वाकाशादीनि विहायाश्रितत्वं साधर्म्यमित्यर्थः॥आश्रितत्वं समवायादिसम्बन्धेन वृत्तित्वम्। विशेषणतया नित्यानामपि कालादौ वृत्तेः॥

सि॰मु॰ ६

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते। क्षित्यादीनामिति सार्द्धम्॥२४॥ क्षितिर्जलमिति ॥ पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्त्तत्ववत्त्वं क्रियावत्त्वं वेगवत्त्वं च साधर्म्यम्॥ न च यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यम्॥ परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्॥ मूर्त्तत्वं अपकृष्टपरिमाणवत्त्वम्॥ तच्चैतेषामेव॥ गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात्॥ पूर्ववत्क्रियावत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम्॥ वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम्॥२५॥ कालखात्मेति॥ कालखात्मदिशाम्॥ सर्वगतत्त्वम्॥ सर्वमूर्त्तसंयोगित्वम्॥ परममहत्त्वम्॥ परममहत्त्वत्वम् जातिविशेषः॥ अपकर्षानाश्रयपरिमाणत्वं वा॥ क्षित्या

क्षित्यादीनां नवानां तु द्रव्यत्वं गुणयोगिता॥२४॥ क्षितिर्जलं तथा तेजः पवनो मन एव च॥ परापरत्वमूर्त्तत्वक्रिया
वेगाश्रया अमी २५ कालखात्मदिशां सर्वगतत्त्वं परमं महत्॥ क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥२६॥
द्रव्यारंभश्चतुर्षु स्यादथाकाशशरीरिणाम् ॥ ११ दीति॥ ॥ पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम्॥ तच्च वहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्॥ अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम्॥ तेन ज्ञातो घट इति प्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात् तद्वृत्ति आत्मनि नातिव्याप्तिः॥ न वा प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः॥ तस्यापि स्वरूपयोग्यत्वात्॥ महत्त्वरूपकारणान्तरासन्निधानाच्च न प्रत्यक्षम्॥ अथवा आत्मावृत्तिविशेषगुणवत्त्वम्॥ चत्वारीति॥ ॥ पृथिव्यप्तेजोवायूनां स्पर्शवत्त्वम्॥ द्रव्यारम्भ इति॥ ॥ पृथिव्यप्तेजोवायुषु चतुर्षु द्रव्यारम्भकत्वम्॥ न च द्रव्यानारंभकघटादावव्याप्तिः॥ द्रव्यसमवायिकारणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्॥ अथाकाशेति॥ ॥

[redacted]

रम॰ ६

प्रत्यक्षोऽदिभाजो लौकिको लौकिकस्य मानसादिप्रत्यक्षो लौकिकः प्रत्यक्षो लौकिकः

आकाशात्मनां अव्याप्यवृत्तिक्षणिकविशेषगुणवत्त्वम्॥ आकाशस्य विशेषगुणः शब्दः स चाव्याप्यवृत्तिः॥ यदा किंचिदवच्छेदेन शब्द उत्पद्यते तदा अन्यावच्छेदेन तदभावस्यापि सत्त्वात्॥ क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्॥ योग्यविभूविशेषगुणानां स्वोत्तरवर्तियोग्यविभूविशेषगुणनाश्यत्वात्॥ प्रथमशब्दस्य द्वितीयशब्देन नाशः॥ एवं ज्ञानादीनामपि ज्ञानादिकं हि आत्मनि शरीरावच्छेदेनोत्पद्यते॥ तदान्यावच्छेदेन तदभावस्यापि सत्त्वात्॥ एवं ज्ञानादिकमपि क्षणद्वयावस्थायि॥ इत्थं चाव्याप्यवृत्तिविशेषगुणवत्त्वं क्षणिकविशेषगुणवत्त्वं च तदर्थः॥ पृथिव्यादौ रूपादिविशेषगुणोस्तीत्यव्याप्यवृत्तीत्युक्तम्॥ पृथिव्यादावव्याप्यवृत्तिः संयोगादिरस्तीति विशेषगुणेत्युक्तम्॥ न च रूपादीनामपि कदाचित्तृतीयक्षणे नाशसंभवात् क्षणिकविशेषगुणवत्त्वं क्षित्यादावतिव्या

॥ अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७॥

प्तिरिति वाच्यम्॥ चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्विशेषगुणवत्त्वस्य तदर्थत्वात्॥ अपेक्षाबुद्धिः क्षणत्रयं तिष्ठति॥ क्षणचतुष्टयं तु न किमपि ज्ञानादिकं तिष्ठति॥ रूपत्वादिकं तु क्षणचतुष्टयावस्थायिन्यपि रूपादौ वर्तत इति तद्व्युदासः॥ ईश्वरज्ञानस्य चतुःक्षणवृत्तित्वाज्ज्ञानत्वस्य तद्वृत्तित्वाज्जन्येत्युक्तम्॥ यथाकाशजीवात्मनोः साधर्म्यं तदा जन्येति न देयम्। द्वेषत्वादिकमादाय लक्षणसमन्वयात्॥ परममहत्त्वस्य तादृशगुणत्वाच्चतुर्थक्षणे द्वित्वादीनामपि नाशाभ्युपगमाद्द्वित्वादीनामपि तथात्वात्तद्वारणाय विशेषेति॥ त्रिक्षणवृत्तित्वं वा वाच्यम्॥ इच्छादिकमादायात्मनि लक्षणसमन्वयः ॥ २७॥ ॥ ॥

सिं॰मु॰ ७ रूपद्रवत्वेति ॥ पृथिव्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वं चेत्यर्थः ॥ न च चक्षुरादीनां भर्जनकपालस्थवन्हेरूष्मणश्च रूप
वत्त्वे किं मानमिति वाच्यम् ॥ तत्रापि तेजस्त्वादिना रूपानुमानात् ॥ एवं वाय्वानीतपृथिवीजलतेजोभागानामपि पृथिवीत्वादिना रूपा
नुमानं बोध्यम् ॥ न च घटादौ दुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यम् ॥ द्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य
विवक्षितत्वात् ॥ घृतजतुप्रभृतिषु पृथिवीषु जलेषु द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात् तत्र पृथिवीत्वादिसत्त्वात्तदादाय सर्वत्र लक्ष
णसमन्वयः ॥ न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तमतिव्याप्तं च रूपादाविति वाच्यम् ॥ चाक्षुषप्रत्यक्षविषयवृत्तिद्रव्यत्वव्याप्य

रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः ॥ गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥ आत्मानो भूतवर्गाश्च विशेष
गुणयोगिनः ॥ यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९ ॥ स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः ॥ स्पर्शाद्य
ष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥ स्पर्शादयोऽष्टौ वेगश्च द्रवत्वं च गुरुत्वकम् ॥ रूपं रसस्तथा स्नेहो वारिण्येते च
तुर्दश ॥ ३१ ॥ स्नेहहीना गंधयुताः क्षितावेते चतुर्दश ॥ ११ जातिमत्त्वस्य विवक्षितत्वात् ॥ आत्मन्यतिव्याप्तिवार
णाय चाक्षुषेति ॥ गुरुणीति ॥ गुरुत्ववत्त्वं रसवत्त्वं च पृथिवीजलयोरित्यर्थः ॥ न च घ्राणेन्द्रियादीनां वाय्वानीतपार्थिवभागानां
च रसादिमत्त्वे किं मानमिति वाच्यम् ॥ तत्रापि पृथिवीत्वादिना तदनुमानात् ॥ ॥ द्वयोरिति ॥ ॥ पृथिवीतेजसोरित्यर्थः ॥ न
च नैमित्तिकद्रवत्ववत्त्वं घटादौ वन्ह्यादौ चाव्याप्तमिति वाच्यम् ॥ नैमित्तिकद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षि
तत्वात् ॥ ॥ आत्मन इति ॥ ॥ पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः ॥ यदुक्तमिति ॥ ॥ ॥ राम॰ ७

शेषत्वादिकं विहायेति बोध्यं। तत्तु न कस्यापि वैधर्म्यं केवलान्वयित्वात्।२९।स्पर्शादय इति।३०।३१।३२।एते च संख्यादयः पञ्च खे आकाशे।३३।३४।३५ साधर्म्यं वै
धर्म्यं निरूप्य सम्प्रति प्रत्येकं निरूपयति॥ तत्र क्षितिरित्यादिना॥ गंधहेतुरिति॥ गंधसमवायिकारणमित्यर्थः॥ यद्यपि गंधवत्त्वमात्रं
लक्षणमुचितं तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम्॥ तथा हि॥ पृथिवीत्वं गन्धसमवायिकारणतावच्छेद
कतया सिध्यति॥ अन्यथा गंधत्वावच्छिन्नस्याकस्मिकत्वापत्तेः॥ न च पाषाणादौ गन्धाभावात् गन्धवत्त्वमव्याप्तमिति वाच्यम्॥ तत्रापि
गंधसत्वात्॥ अनुपलब्धिस्तु अनुत्कटत्वेनाप्युपपद्यते॥ कथमन्यथा तद्भस्मनि गन्धउपलभ्यते॥ भस्मनो हि पाषाणध्वंसजन्यत्वात्पा

बुध्यादिषट्कं संख्यादिपंचकं भावना तथा॥३२॥ धर्माधर्मौ गुणा एते चात्मनः स्युश्चतुर्दश॥ सङ्ख्यादिपञ्चकं काल
दिशोः शब्दश्च ते च खे॥३३॥ सङ्ख्यादयः पञ्च बुद्धिरिच्छा यत्नोपि चेश्वरे॥ परापरत्वे संख्यादि पञ्च वेगश्च मानसे॥
३४॥ वायोर्नवैकादश तेजसो गुणा जलक्षितिप्राणभृतां चतुर्दश॥ दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेष्टौ मनसस्तथैव
च॥३५॥ तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता॥ ९

षाणोपादानोपादेयत्वं सिध्यति॥ यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तद्द्रव्यं
तदुपादानोपादेयमिति व्याप्तेः॥ दृष्टं चैतत् खण्डपटे महापटध्वंसजन्ये॥ इत्थं च पाषाणपरमाणोः पृथिवीत्वात्तज्जन्यपाषाणस्या
पि पृथिवीत्वम्॥ तथा च तस्यापि गंधवत्त्वे बाधकाभावः॥ नानारूपवतीति॥ शुक्लनीलादिभेदेन नानाजातीयरूपं पृथिव्यामेव वर्त
ते॥ न तु जलादौ॥ तत्र शुक्लस्यैव सत्वात्॥ पृथिव्यां त्वेकस्मिन्नपि धर्मिणि पाकवशेन नानारूपसंभवात्॥ न च नानारूपं यत्र नास्ति
न तत्राव्याप्तिः॥ रूपद्वयवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्वस्य रूपनाशवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्वस्य वा विवक्षितत्वात्॥ ॥

वैशेषिकनये पृथिवीपरमाणोरूपनाशस्य रूपान्तरस्य च सत्वात् न्यायनये घटादावपि तत्सत्वाल्लक्षणसमन्वयः ॥ षड्विध इति ॥ मधुर
कटुकषायादिभेदेनेत्यर्थः षड्विधो रसः स पृथिव्यामेव वर्त्तते ॥ जले तु मधुर एव रसः ॥ अत्रापि पूर्ववद्रसवद्वृत्तिद्रव्यत्वव्याप्यजा
तियत्वं लक्षणार्थो बोद्धव्यः ॥ द्विविध इति वस्तुस्थितिमात्रं न तु द्विविधगन्धवत्वं लक्षणम् अधिकस्य व्यर्थत्वात् द्वैविध्यं च सौरभासौ
रभभेदेन बोध्यम् ॥ स्पर्श इति ॥ तस्याः पृथिव्याः अनुष्णाशीतस्पर्शवत्वं वायावपि वर्त्तते अत उक्तं पाकज इति ॥ इत्यं च पृथिव्याः स
र्शोनुष्णाशीत इति ज्ञापनार्थमेतदुक्तम् ॥ पाकजस्पर्शवत्वमात्रं लक्षणं अधिकस्य वैयर्थ्यात् ॥ यद्यपि पाकजस्पर्शः पटादौ नास्ति त
थापि पाकजस्पर्शवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्वमर्थो बोध्यः ॥ नित्येति ॥ सा पृथिवी नित्या अनित्या चेत्यर्थः अणुलक्षणा परमाणु

षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३६ ॥ स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः ॥ नित्यानित्या च सा
द्वेधा नित्या स्यादणुलक्षणा ॥ ३७ ॥ अनित्या तु तदन्या स्यात्सैवावयवयोगिनी ॥ ११ लक्षणा पृथिवी नित्या ॥ तदन्या

परमाणुभिन्ना पृथिवी द्व्यणुकादिः सर्वाप्यनित्येत्यर्थः ॥ ३७ सैव ॥ अनित्या पृथिवी एव अवयववतीत्यर्थः ॥ नन्ववयविनि किं मा
नम् ॥ परमाणुपुञ्जैरेवोपपत्तेः ॥ न च परमाणूनामतीन्द्रियत्वात् घटादेः प्रत्यक्षं न स्यात् इति वाच्यम् ॥ एकस्य परमाणोरप्रत्यक्ष
त्वेपि तत्समूहस्य प्रत्यक्षत्वात् ॥ यथा एकस्य केशस्य दूरे अप्रत्यक्षत्वेपि तत्समूहस्य प्रत्यक्षत्वम् ॥ न च एकः स्थूलो घट इति बुद्धेर
नुपपत्तिरिति वाच्यम् ॥ एको महान् धान्यराशिरितिवदुपपत्तेः ॥ मैवम् ॥ परमाणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षत्वायो राम॰
गात् ॥ दूरस्थकेशस्तु नातीन्द्रियः ॥ सन्निधाने तस्यैव प्रत्यक्षत्वात् ॥ न च तदानीं दृश्यस्य परमाणुपुञ्जस्योत्पन्न

नवयवसमवायिनोरामेप॰ पं॰ ८५

त्वात्प्रत्यक्षत्वेपि अविरोध इति वाच्यम्। अदृश्यस्य दृश्यानुत्पादकत्वात्॥ अन्यथा चक्षुरूष्मादिसंततौ कदाचिद्दृश्यत्वप्रसङ्गात्॥ नचा
तितप्ततैलादौ कथमदृश्यदहनसंततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्॥ तत्र तदन्तःपातिभिर्दृश्यदहनावयवैर्दृश्यदहनोत्पत्तेरभ्युपगमा
त्। नचादृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यम्। यतो न वयं दृश्यत्वमदृश्यत्वं वा कस्यचित्स्वभावादाचक्ष्महे॥ परं तु महत्त्वोद्भूत
रूपादिकारणसमुदायवशाद्दृश्यत्वं तदभावे चादृश्यत्वम्॥ तस्मात्त्र्यसरेणोर्महत्त्वात्प्रत्यक्षत्वं न तु द्व्यणुकादेः तदभावात्॥ न हि त्वे
न्मतेपीदं सम्भवति॥ परमाणोर्महत्त्वाभावात्॥ इत्यञ्चावयवविसिद्धौ तेषामुत्पादविनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम्॥ तेषां चा
वयवधाराया अनन्तत्वे मेरुसर्षपयोः साम्यप्रसङ्गः॥ अतः क्वचिद्विश्रामो वाच्यः॥ यत्र विश्रामस्तस्यानित्यत्वे असमवेतका

॥ सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा॥ ३८॥ योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम्॥

र्योत्पत्तिप्रसङ्गान्नित्यत्वम्॥ महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिव अणुपरिमाणतारतम्यस्यापि क्वचित् वि
श्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः॥ नच त्रसरेणावेव विश्रामोस्त्विति वाच्यम्॥ त्र्यसरेणुः सावयवः चाक्षुषद्रव्यत्वात् घटवत्
इत्यनुमानेन तदवयवसिद्धौ त्र्यसरेणोरवयवाः सावयवाः महदारंभकत्वात्॥ कपालवदित्यनुमानेन तदवयवसिद्धिः॥ नचे
दमप्रयोजकम्॥ अपकृष्टमहत्त्वं प्रति अनेकद्रव्यत्वस्य प्रयोजकत्वात्॥ न चैवं क्रमेण तदवयवधाराया अपि सिद्धेरिति वाच्यम्॥ अ
नवस्थाभयेन तदसिद्धेरिति॥ सेति॥ सा कार्यरूपा पृथिवी त्रिविधा॥ शरीरेन्द्रियविषयभेदादित्यर्थः ३९ तत्र देहमुदाहरति॥ योनि
जादीति॥ योनिजमयोनिजं चेत्यर्थः॥ योनिजमपि जरायुजमण्डजं चेत्यर्थः। जरायुजं मानुषादीनाम्॥ अण्डजं सर्पादीनाम् ॥



सि॰ मु॰ ९

अयोनिजं स्वेदजोद्भिज्जादिकम्॥ स्वेदजाः कृमिदंशाद्याः॥ उद्भिज्जस्तरुगुल्माद्याः॥ नारकीणां शरीरमप्ययोनिजम्॥ नच मानुषा
दिशरीराणां पार्थिवत्वे किं मानमिति वाच्यम्॥ गन्धादिमत्त्वस्यैव प्रमाणत्वात्॥ नत्वक्लेदोष्मादेरुपलंभादाप्यत्वादिकमपि स्या
दिति वाच्यम्॥ तथा सति जलत्वपृथिवीत्वादिना साङ्कर्यप्रसङ्गात्॥ नच तर्हि जलत्वादिकमेवास्तु न तु पार्थिवत्वादिकमिति वाच्यम्॥
क्लेदादीनां विनाशेपि शरीरत्वेन प्रत्यभिज्ञानात्॥ गन्धाद्युपलब्धेश्च पृथिवीत्वसिद्धेः॥ एतेन पार्थिवादिशरीरे जलादीनां निमित्तत्व
मात्रं बोध्यम्॥ शरीरत्वं न जातिः॥ पृथिवीत्वादिना साङ्कर्यात्॥ किं तु चेष्टाश्रयत्वम्॥ वृक्षादीनामपि चेष्टासत्वान्नाव्याप्तिः॥ नच वृ
क्षादेः शरीरत्वे किं मानमिति वाच्यम्॥ आध्यात्मिकवायुसम्बन्धस्य प्रमाणत्वात्॥ तत्रैव किं मानमिति चेत्॥ भग्नक्षतसंरोहणादिना
तदनुमानात्॥ यदि हस्तादौ शरीरव्यवहारो न भवति तदान्त्यावयवित्वेन विशेषणीयम्॥ नच यत्र शरीरे चेष्टा न जाता तत्राव्याप्तिरि
ति वाच्यम्॥ तादृशे प्रमाणाभावात्॥ अथवा चेष्टावदन्त्यावयवि[redacted]वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वम्॥ अन्त्यावयविमात्रवृत्ति
चेष्टावद्वृत्ति[redacted]जातिमत्त्वं वा तत्॥ एवं मानुषत्वचैत्रत्वादिजातिमादाय लक्षणसमन्वयः॥ नच नृसिंहशरीरे कथमेतल्लक्ष
णसमन्वयः तत्र नृसिंहत्वस्यैकव्यक्तिवृत्तितया जातित्वाभावात्॥ जलीयतैजसशरीरवृत्तितया देवत्वस्यापि जातित्वाभावादिति
वाच्यम्॥ कल्पभेदेन नृसिंहशरीरस्य नानात्वेन नृसिंहत्वजात्या लक्षणसमन्वयात्॥ इंद्रियमिति॥ घ्राणेन्द्रियं पार्थिवमित्यर्थः
॥ पार्थिवत्वं कथमिति चेदित्थम्॥ घ्राणेन्द्रियं पार्थिवम्॥ रूपादिषु पञ्चसु मध्ये गन्धस्यैवाभिव्यञ्जकत्वात्॥ कुङ्कुमगन्धाभि
व्यञ्जकं गोघृतादिवत्॥ नच दृष्टान्ते स्वीय रूपादिव्यञ्जकत्वाद सिद्धिरिति वाच्यम्॥ परकीयरूपाद्यव्यञ्जकत्वस्य तदर्थत्वात्॥ नच नं राम॰
वशरावगन्धाभिव्यञ्जकजलेनानैकान्त्यमिति वाच्यम्॥ तस्य सक्तुरसाभिव्यंजकत्वात्॥ यद्वा परकीयेति न देयम्॥ वायू ९



पनीतस्फुरभिभागस्यदृष्टान्तत्वसम्भवात्॥ नचघ्राणेन्द्रियसन्निकर्षस्यागन्धमात्रभि व्यञ्जकत्वात्तत्रव्यभिचारइतिवाच्यम्॥ द्रव्यत्वेसतीति विशेषणात्॥ विषयइति॥ उपभोगसाधनंविषयः॥ सर्वमेवहिकार्यजातंअदृष्टाधीनम्॥ यच्चकार्यंयददृष्टाधीनन्तत्तदुपभोगंसाक्षा त्परम्परयावाजनयत्येव॥ नहिबीजप्रयोजनाभ्यांविनाकस्यचिदुत्पत्तिरस्ति॥ तेनद्व्यणुकादिकंब्रह्माण्डान्तंसर्वमेवविषयोभवं ति॥ शरीरेन्द्रिययोर्विषयत्वेपिप्रकारान्तरेणोपन्यासः शिष्यबुद्धिवैशद्यार्थः ३९ जलंनिरूपयति ॥ वर्णेति॥ स्नेहसमवायिकारण तावच्छेदकतयाजलत्वजातिःसिद्ध्यति॥ यद्यपिस्नेहत्वंनित्यानित्यवृत्तितयानकार्यतावच्छेदकं तथापिजन्यस्नेहत्वंतथाबोध्य म्॥ अथपरमाणोजलत्वंनस्यात्॥ तत्रजन्यस्नेहाभावात्॥ तस्यचनित्यस्यस्वरूपयोग्यत्वेफलावश्यंभावइतिनियमादितिचेन्न॥

विषयोद्व्यणुकादिस्तुब्रह्माण्डान्तउदाहृतः॥ ३९ ॥ वर्णःशुक्लोरसस्पर्शौजलेमधुरशीतलौ ॥

जन्यस्नेहजनकतावच्छेदकतयाजन्यजलत्वजातेःसिद्धौतदवच्छिन्नजनकतावच्छेदकतयानित्यजलेपि जलत्वजातिसिद्धेः॥ शुक्लरू पमेवजलस्येतिदर्शयितुमुक्तंवर्णःशुक्लइति॥ ननुशुक्लरूपवत्त्वंलक्षणम्॥ अथवानैमित्तिकद्रवत्ववद्वृत्तिशुक्लरूपवद्वृत्तिद्रव्य त्वसाक्षाद्व्याप्यजातिमत्त्वम्॥ अभास्वरशुक्लेतररूपासमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वंवातदर्थः॥ तेनस्फटिकादौनाति॥ जलस्यमधुरएवरसः॥ शीतएवस्पर्शः॥ तिक्तवद्वृत्तिमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वंतदर्थः॥ ननुशुक्लरूपमेवे तिकुतः। कालिन्दीजलादौनीलिमोपलब्धेरितिचेन्न॥ नीलजनकतावच्छेदिकायाःपृथिवीत्वजातेरभावाज्जलेनीलरूपासम्भ वात्॥ कालिन्दीजलेनीलत्वप्रतीतिस्तुआश्रयोपाधिकीभ्रान्तैव॥ अतएववियतिविक्षेपेधवलिमोपलब्धेः। अथजलेमाधुर्येकिंमा

तेनशर्करादौनातिव्याप्तिः॥ शीतेतररसस्पर्शवद्वृत्तिसशब्दवृत्तिजातिमत्त्व पं॰ २ तु

नम्॥ नहितत्र प्रत्यक्षेण कोपिरसस्तत्रानुभूयते॥ नचनारिकेलजलादौ माधुर्य्यमुपलभ्यत इतिवाच्यम्॥ तस्याश्रयोपाधिकत्वात्॥ अ
न्यथाजम्बीरकरवीररसादौ आम्लाद्युपलब्धेराम्लत्वादिकमपिस्यादितिवाच्यम्॥ हरीतक्यादिभक्षणस्यजलरसव्यञ्जकत्वात्
॥ नचहरीतक्यामेवजलोष्मसंयोगाद्रसान्तरोत्पत्तिरितिवाच्यम्॥ कल्पनागौरवात्॥ पृथिवीत्वस्याम्लादिजनकतावच्छेदकत्वाच्च
जलेनाम्लादिकम्॥ जम्बीररसादौत्वाश्रयोपाधिकीतथाप्रतीतिः॥ एवंजन्यशीतस्पर्शजनकतावच्छेदकंजन्यजलत्वंतेदवच्छिन्नजनकता
वच्छेदकंजलत्वंबोध्यम्॥ घृष्टचन्दनादौतुशैत्योपलब्धिश्चन्दनान्तरवर्त्तिशीततरसलिलस्य॥ तेजःसंयोगाज्जलेउष्णत्वप्रतीतिरौपाधिकीस्फुटैव॥ तत्र
पाकासम्भवात्॥ स्नेह इति॥ घृतादावपितदन्तर्वर्त्तिजलस्यैवस्नेहः॥ जलस्यैवस्नेहसमवायिकारणत्वात्॥ तेनजलेएव

स्नेहस्तत्रद्रवत्वन्तु सांसिद्धिकमुदाहृतं ॥४०॥ नित्यतादिप्रथमवत्किन्तुदेहमयोनिजम्॥ इन्द्रियंरसनंसिन्धुहिमादि
र्विषयोमतः॥४१॥

स्नेह इति मन्तव्यम्॥ द्रवत्वमिति॥ सांसिद्धिकद्रवत्वत्वंजातिविशेषः प्रत्यक्षसिद्धः॥ तदवच्छिन्नजनकतावच्छे
दकमपितदेवेतिभावः॥ तैलादावपिजलस्यैवद्रवत्वम्॥ स्नेहप्रकर्षेणदहनानुकूल्यमितिवक्ष्यति ४० नित्यतादिप्रथमवत्। पृथिव्याइवेत्यर्थः॥ तथा
हि। जलंद्विविधम्। नित्यमनित्यञ्च। परमाणुरूपंनित्यम्। तदन्यदनित्यम्। अवयवसमवेतन्। अनित्यमपित्रिविधम्। शरीरेन्द्रियविषयभे
दात्। पृथिवीतोयोविशेषस्तमाह॥ किन्तुदेहमयोनिजम्। अयोनिजमेवेत्यर्थः। जलीयंशरीरमयोनिजंवरुणलोकेप्रसिद्धम्॥ इंद्रियंरसन
मिति॥ रसनेन्द्रियंजलीयमित्यर्थः। तथाहि। रसनंजलीयंगन्धाद्यव्यञ्जकत्वेसतिरसव्यञ्जकत्वात्। सक्तुरसाभिव्यञ्जकोदकवत्। रं
सनसन्निकर्षेव्यभिचारवारणायद्रव्यत्वंदेयम्॥ विषयंदर्शयति॥ सिन्धुर्हिमादिरिति॥ सिन्धुःसमुद्रः॥ हिमंतुषारः॥ आदिपदात्सरि

त्कासारकरकादिः सर्वोप्यर्थोयास्यः ।। नचहिमकरकयोः काठिन्यात्पार्थिवत्वमिति वाच्यम् ।। ऊष्मणा विलीनयोस्तयोर्जलत्वस्य प्रत्यक्षसिद्धत्वात् ।। यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तद्द्रव्यं तदुपादानोपादेयमिति व्याप्तेः ।। जलोपादानोपादेयत्वसिद्धेः ।। अदृष्टविशेषेण द्रवत्वप्रतिरोधात् ।। करकायां काठिन्यप्रत्ययस्य भ्रान्तित्वात् ।।४१।। तेजो निरूपयति ।। स्पर्श उष्ण इत्यादिना ।। उष्णत्वस्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः ।। इत्थञ्च जन्योष्णस्पर्शसमवायिकारणतावच्छेदकं तेजस्त्वं जातिविशेषः ।। तस्य परमाणुवृत्तित्वन्तु जलत्वस्येवानुसन्धेयम् ।। नचोष्णस्पर्शवत्त्वं चन्द्रकिरणादावव्याप्तमिति वाच्यम् ।। तत्राप्युष्णस्पर्शसत्वात् ।। किन्तु तदन्तःपातिजलस्पर्शेनाभिभवात्तदग्रहः ।। एवं रत्नकिरणादौ च पार्थिवस्पर्शेनाभिभवाच्चक्षुरादौ चानुद्भूतत्वात्तदग्रहः ।। रूपमित्यादि ।। वैश्वानरे मरकतकिरणा

।।स्पर्श उष्णस्तेजसस्तु स्याद्रूपं शुक्लभास्वरं ।। नैमित्तिकं द्रवत्वन्तु —— नित्यतादि च पूर्ववत् ४२

दौ च पार्थिवरूपेणाभिभवाच्छुक्लरूपाग्रहः ।। ननु तद्रूपाग्रहे धर्मिणोपि चाक्षुषत्वं न स्यादिति चेन्न ।। अन्यदीयरूपेणापि धर्मिणो ग्रहसंभवात् ।। शङ्खस्येव पित्तपीतिम्ना ।। वन्हेस्तु शुक्लं रूपं नाभिभूतम् । किंतु तदीयं शुक्लत्वमभिभूतमित्यन्ये ।। नैमित्तिकमिति ।। सुवर्णादिरूपे तेजसि तत्सत्वात् ।। नच नैमित्तिकद्रवत्ववत्त्वं लक्षणं दहनादावव्याप्तं —— घृतादावतिव्याप्तं चेति वाच्यम् ।। पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्वस्य विवक्षितत्वात् ।। पूर्ववदिति ।। जलस्येवेत्यर्थः ।। तथाहि तेजो द्विविधम् ।। नित्यमनित्यञ्च ।। परमाणुरूपं नित्यम् । तदन्यदनित्यमवयवि च ।। तच्च त्रेधा ।। शरीरेन्द्रियविषयभेदात् ।। शरीरमयोनिजमेवेति ।।

नतु चक्षुषस्तैजसत्वे किं मानमिति चेत् ॥ पं॰ ३॰ १

सि॰मु॰ ११ तच्च सूर्यालोकादौ प्रसिद्धम् ४२ अत्र यो विशेषस्तमाह ॥ इन्द्रियमिति ॥ चक्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् ॥ प्रदीपवत् ॥ प्रदीपस्य स्वीयस्पर्शव्यञ्जकत्वादाद्यं परकीयेति ॥ घ[illegible]देः स्वीयरूपव्यञ्जकत्वाद्व्यभिचारवारणाय द्वितीयं परकीयेति ॥ अथवा प्रभाया दृष्टान्तत्वसम्भवादाद्यं परकीयेति न देयम् ॥ चक्षुःसन्निकर्षे व्यभिचारवारणाय द्रव्यत्वं देयम् ॥ विषयं दर्शयति ॥ वह्नीति ॥ ननु सुवर्णस्य तैजसत्वे किं मानमिति चेन्न ॥ सुवर्णं तैजसं असति प्रतिबन्धके अत्यन्तानलसंयोगेप्यनुच्छिद्यमानद्रवत्वात् ॥ यन्नैवं तन्नैवम् यथा पृथिवी ॥ न चाप्रयोजकम् ॥ पृथिवीद्रवत्वस्य जलद्रवत्वस्य चाग्निसंयोगनाश्यत्वात् ॥ ननु पीतिमगुरुत्वाश्रयस्य पार्थिवस्यापि तदानीं द्रुतत्वात्तेन व्यभिचार इति चेन्न ॥ जलमध्यस्थमसीक्षोदवत्तस्याद्रवत्वात् ॥ अपरेत्व

इन्द्रियं नयनं वह्निः स्वर्णादिर्विषयो मतः ॥ अपाकजानुष्णाशीतस्पर्शस्तु पवने मतः ॥ ४३ ॥ तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः

अन्यरूपाभावदर्शनादित्यर्थः १

पीतिमाश्रयस्य अत्यन्तानलसंयोगेपि पूर्वरूपापरावृत्तिदर्शनात्तत्प्रतिबन्धकं विजातीयद्रवद्रव्यं कल्प्यते ॥ तथा हि ॥ अग्निसंयोगी पीतिमगुरुत्वाश्रयः ॥ विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः ॥ अत्यन्तानलसंयोगेपि पूर्वरूपविजातीयरूपानधिकरणपार्थिवत्वात् ॥ जलमध्यस्थपीतपटवत् ॥ तस्य पृथिवीजलभिन्नस्य तैजसत्वनियमात् ॥ वायुं निरूपयति ॥ अपाकज इति ॥ अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वादत उक्तमपाकज इति ॥ अपाकजस्पर्शस्य जलादावपि सत्त्वादत उक्तमनुष्णाशीत इति ॥ एतेन वायवीयो विजातीयस्पर्शो दर्शितः ॥ तज्जनकतावच्छेदकं वायुत्वमिति भावः ॥ एषः वायुः स्पर्शादिलिङ्गकः ॥ वायुर्हि स्पर्शशब्दधृतिक राम॰ ११
म्पैरनुमीयते ॥ विजातीयस्पर्शेन विलक्षणशब्देन तृणादीनां धृत्या शाखादीनां कम्पनेन वायोरनुमानात् ॥ ० ॥

अन्यरूपप्रतिबन्धकमित्यर्थः ६

देहो वायुसंयोगी अपाकजानुष्णाशीतस्पर्शसंयोगात् [illegible]
[illegible]

प्रवयवीत्यर्थः

यथा च वायुर्न प्रत्यक्षस्तथाग्रे वक्ष्यते ४३ पूर्ववदिति॥ वायुर्द्विविधः नित्योऽनित्यश्च॥ परमाणुरूपो नित्यः॥ तदन्योऽनित्यः॥ समवेतश्च
सोऽपि त्रिविधः॥ शरीरेन्द्रियविषयभेदात्॥ तत्र शरीरमयोनिजं पिशाचादीनाम्॥ परन्तु जलीयतैजसवायवीयशरीराणां पार्थिवभा
गोपष्टंभकत्वादुपभोगक्षमत्वम्॥ जलादीनां प्राधान्याज्जलीयत्वादिकमिति॥ अत्रयो विशेषस्तमाह॥ देहव्यापीति॥ ॥ ॥
शरीरव्यापकं स्पर्शग्राहकमिन्द्रियं त्वक्॥ तच्च वायवीयम्॥ रूपादिषु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वात्॥ अङ्गसङ्गिसलिलशैत्या
भिव्यञ्जकव्यजनपवनवत् ४४ विषयं दर्शयति॥ प्राणादिस्त्विति॥ यद्यपि अनित्यो वायुश्चतुर्विधस्तस्य चतुर्थी विधा प्राणादिरित्युक्त
माकरे तथाप्यत्र संक्षेपात् त्रैविध्यमुक्तम्॥ प्राणस्त्वेक एव हृदादिनानास्थानवशान्मुखनिर्गमादिनानाक्रियावशाच्च नानासंज्ञां ल

पूर्ववन्नित्यताद्युक्तं देहव्यापित्वगिन्द्रियम्॥४४॥ प्राणादिस्तु महावायुपर्यंतो विषयो मतः॥ आकाशस्य तु विज्ञेयः श
ब्दो वैशेषिको गुणः ४५

[redacted]भत इति॥ आकाशं लक्षयति॥ आकाशस्येति॥ आकाशकालदिशामेकैकव्यक्तित्वादाकाशत्वादिकं न
जातिः॥ किन्तु आकाशत्वं शब्दाश्रयत्वं वैशेषिक इति कथनं तु विशेषगुणान्तरव्यवच्छेदाय॥ एतेन प्रमाणमपि दर्शितम्॥ तथा हि॥ श
ब्दो गुणः॥ चक्षुर्ग्रहणायोग्यत्वे सति बहिरिन्द्रियग्राह्यजातिमत्वात् स्पर्शवत्॥ शब्दो द्रव्यसमवेतः गुणत्वात्संयोगवदित्यनुमानेन शब्दस्य द्रव्यसमवे
तत्वसिद्धेः॥ शब्दो न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभावे सति अकारणगुणपूर्वकप्रत्यक्षत्वात् सुखवत्॥ पा
कजरूपादौ व्यभिचारवारणाय सत्यन्तम्॥ पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति॥ जलपरमाणुरूपादौ व्यभिचार
वारणाय प्रत्यक्षेति॥ न दिक्कालमनोगुणः विशेषगुणत्वात् रूपवत्॥ नात्मविशेषगुणः बहिरिन्द्रियग्राह्यत्वात् रूपवत्॥ इत्थं

शब्दे

प्रत्यक्षविषयत्वादित्यर्थः



प्रतिव्यक्ति विभिन्नत्वेनानेकत्वापेक्षया॥

सि॰मु॰ १२ च शब्दाधिकरणं नवमद्रव्यं गगननामकं सिध्यति॥ न च वाय्ववयवेषु सूक्ष्मशब्दक्रमेण वायौ कारणगुणपूर्वकः शब्द उत्पद्यतामिति वा
च्यम्॥ अयावद्द्रव्यभावित्वेन वायौ विशेषगुणत्वाभावात् ४५ तत्र शरीरस्य विषयस्य चाभावात्॥ इन्द्रियं दर्शयति॥ इन्द्रियमिति॥
नन्वाकाशस्य लाघवादेकं सिद्धं श्रोत्रं पुरुषभेदाद्भिन्नं कथमाकाशं स्यादत आह॥ एकः सन्नपीति॥ ॥ आकाशः एकः सन्नप्युपाधेः
कर्णशष्कुल्यादेर्भेदाद्भिन्नं श्रोत्रात्मकं भवतीत्यर्थः॥ कालं निरूपयति॥ जन्यानामिति॥ तत्र प्रमाणं दर्शयितुमाह॥ जगतामाश्रय
इति॥ तथा हि॥ इदानीं घट इति प्रतीतिः सूर्यपरिस्पन्दादिकं यदा विषयीकरोति॥ तदा सूर्यपरिस्पंदादिना घटादेः संबन्धो वाच्यः॥ स च सं
योगादिर्न सम्भवतीति काल एव संबन्धघटकः कल्प्यते॥ इत्थं च तदाश्रयत्वमेव सम्यक् ४६ प्रमाणान्तरं वदति॥ परापरत्वेति॥ परप

स्वाधिकरणकालत्वं तिलकः २

इन्द्रियं च भवेच्छ्रोत्रमेकः सन्नप्युपाधितः॥ जन्यानां जनकः कालो जगतामाश्रयो मतः॥ ४६॥ परापरत्वधीहेतुः क्षण
दिः स्यादुपाधितः॥ दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते॥ ४७॥ ९ रत्वादिबुद्धेरसाधारणं निमित्तं काल एव॥ परापरत्वयो
रसमवायिकारणसंयोगाश्रयो लाघवादतिरिक्तः कल्प्यत इति भावः॥ नन्वेकस्य कालस्य सिद्धौ क्षणदिनमाससवर्षादिसमयभेदो न स्याद
त आह॥ क्षणादिरिति॥ कालस्त्वेकोऽप्युपाधिभेदात्क्षणादिव्यवहारविषय इत्यर्थः॥ उपाधिस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म॥
पूर्वसंयोगावच्छिन्नविभागो वा॥ पूर्वसंयोगनाशावच्छिन्नउत्तरसंयोगप्रागभावो वा॥ उत्तरसंयोगावच्छिन्नं कर्म वा॥ न च उत्तरसंयोगा
नन्तरं क्षणव्यवहारो न स्यादिति वाच्यम्॥ कर्मान्तरसत्त्वात्। महाप्रलये क्षणादिव्यवहारो यद्यस्ति तदा अनायत्या ध्वंसेनैवोपपादनीयेति। राम॰
दिनादिव्यवहारस्तु तत्क्षणकूटैरिति। दिशं निरूपयति॥ दूरान्तिकेति॥ दूरत्वमन्तिकत्वं च दैशिकं परत्वमपरत्वं च बोध्यम्। ॥ १२

कामि ४



तद्बुद्धेरसाधारणंनिमित्तंदिगेव॥ दैशिकपरत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतया दिक्सिध्यतीतिभावः४७ ननुएकैवदि
ग्यदितदाप्राच्यादिव्यवहारःकथमुत्पद्यतामित्यतआह॥ उपाधीति॥ यदायत्पुरुषस्य उदयगिरिसन्निहितादिक्तदातत्पुरुषस्यसा
प्राची॥ उदयगिरिव्यवहितादिग्प्रतीची॥ एवंतत्पुरुषस्यसुमेरुसन्निहितादिगुदीची॥ तद्व्यवहितात्ववाची॥ सर्वेषामेववर्षाणांमे
रुरुत्तरतस्थित इति नियमात्॥ आत्मानंनिरूपयति॥ आत्मेति॥ आत्मत्वंजातिः सुखदुःखसमवायिकारणतावच्छेदकतयासिद्ध्य
ति॥ ईश्वरेपिसाजातिरस्तिअदृष्टरूपकारणाभावान्नसुखदुःखाद्युत्पत्तिः॥ नित्यस्यस्वरूपयोग्यत्वस्यफलावश्यंभाव इति नियम
स्याप्रयोजकत्वात्॥ परेतु॥ ईश्वरेसाजातिर्नास्त्येव॥ मानाभावात्॥ नचदशमद्रव्यत्वापत्तिः॥ ज्ञानवत्त्वेनविभजनादित्याहुः॥ इन्द्रि

उपाधिभेदादेकापिप्राच्यादिव्यपदेशभाक्॥ आत्मेंद्रियाद्यधिष्ठाताकरणंहिसकर्तृकं॥४८॥ शरीरस्यनचैतन्यंमृते
षुव्यभिचारतः॥

यादिति॥ अधिष्ठाता इन्द्रियाणां शरीरस्यच परम्परया चैतन्यसम्पादकः॥ यद्यप्यात्मनि अहंजाने अहंसुखीत्या
दिप्रत्यक्षविषयत्वमस्त्येवतथापिविप्रतिपन्नंप्रतिप्रथमतएवशरीरादिभिन्नस्तत्प्रतीतिगोचर इति प्रतिपादयितुंनशक्यत इति अतः
प्रमाणांतरंदर्शयति॥ करणंहीति॥ वास्यादीनांछिदाकरणानांकर्त्तारमन्तरेणफलानुपधानंदृष्टम्॥ एवंचक्षुरादीनांज्ञानकरणानामपि
फलोपधानंकर्त्तारमन्तरेणनोपपद्यत इत्य – तिरिक्तःकर्ताकल्प्यते ४८ ननुशरीरस्यैवकर्तृत्वमस्त्वितआह॥ शरीरस्येति॥ ननुचैतन्यं
ज्ञानादिकमेव॥ तच्चात्मनांत्वन्मते इव मृतशरीराणांतदभावेपिकाक्षतिः॥ प्राणाभावेनज्ञानाभावस्यसिद्धेरितिचेन्न॥ शरीर
स्यचैतन्येबाल्येविलोकितस्यस्थविरस्मरणंनस्यात् शरीराणामवयवोपचयापचयैरुत्पादविनाशशालित्वात्॥ ॥ ॥



न च पूर्वशरीरोत्पन्नसंस्कारेण द्वितीयशरीरे संस्कार उत्पद्यत इति वाच्यम्॥ अनन्तसंस्कारकल्पने गौरवात्॥ एवं शरीरस्य चैतन्ये बालक
स्य स्तनपानादौ प्रवृत्तिर्न स्यात्॥ इष्टसाधनताज्ञानस्य तद्धेतुत्वात्॥ तदानीमिष्टसाधनत्वानुभावकाभावात्॥ मन्मते तु जन्मान्तरानु
भूतेष्टसाधनत्वस्य तदानीं स्मरणादेव प्रवृत्तिः॥ न च जन्मान्तरानुभूतमप्यदपि स्मर्यतामिति वाच्यम्॥ उद्बोधकाभावात्॥ अत्र त्वना
यत्या जीवनादृष्टमेवोद्बोधकं कल्प्यते॥ इत्थं च संसारस्यानादितया आत्मनोऽप्यनादित्वसिद्धौ अनादिभावस्य नाशासम्भवान्नित्य
त्वं सम्भवतीति बोध्यम्॥ ननु चक्षुरादीनामेव ज्ञानादौ करणत्वं कर्तृत्वं चास्तु॥ विरोधे साधकाभावादत आह॥ तथात्वमिति॥ तथात्वं चैत
न्यमित्यर्थः॥ उपघाते नाशे सति अर्थाच्चक्षुरादीनामेव॥ कथमिति॥ पूर्वं चक्षुषा साक्षात्कृतानां चक्षुरभावे स्मरणं न स्यात्॥ अनुभवि

तथात्वमिन्द्रियाणां चेदुपघाते कथं स्मृतिः॥ ४९॥ मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्॥

तुरभावात्॥ अन्यानुभूतस्यान्येन स्मरणासंभवात्॥ अनुभवस्मरणयोः सामानाधिकरण्येन कार्यकारणभावादिति भावः ४९ ननु च
क्षुरादीनां चैतन्यमास्तां मनसस्तु नित्यस्य चैतन्यं स्यादत आह॥ मनोऽपीति॥ न तथा न चेतनं। ज्ञानादीति॥ मनसोऽणुत्वात्प्रत्य
क्षे महत्त्वस्य हेतुत्वात् मनसि ज्ञानसुखादिसत्त्वे तत्प्रत्यक्षानुपपत्तेरित्यर्थः। यथा च मनसोऽणुत्वं तथाग्रे वक्ष्यते॥ नन्वस्तु विज्ञानमे
वात्मा॥ तस्य स्वतः प्रकाशत्वाच्चेतनत्वम्॥ ज्ञानसुखादिकं तु तस्यैवाकारविशेषः॥ तस्यापि भावत्वादेव क्षणिकत्वम् पूर्वपूर्ववि
ज्ञानस्योत्तरोत्तरविज्ञाने हेतुत्वात्॥ सुषुप्तावपि --लयविज्ञानधारा निराबाधैव॥ मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसं
स्काराणामुत्तरोत्तरविज्ञाने संक्रान्तत्वान्नानुपपत्तिः स्मरणादेरिति चेन्न॥ तस्य जगद्विषयत्वे सार्वज्ञतापत्तिः॥ ॥ ॥

यत्किञ्चिद्विषयत्वे विनिगमकाभावः। सुषुप्तावपि विषयावभासप्रसङ्गश्च॥ ज्ञानस्य सविषयत्वात्। तदानीं निराकारा चित्सन्ततिरनुवर्त्तत इति चेन्न। तस्याः प्रका
शत्वे प्रमाणाभावात्॥ अन्यथा घटादीनामपि विज्ञानत्वापत्तिः। न चेष्टापत्तिः विज्ञानव्यतिरिक्तस्य वस्तुनोऽभावादिति वाच्य
म्॥ घटादेरनुभूयमानस्यापलपितुमशक्यत्वात्॥ आकारविशेष एवायं विज्ञानस्येति चेन्न॥ किमयमाकारोऽतिरिच्यते विज्ञा
नात्तर्हि समायातं विज्ञानव्यतिरिक्तेन नातिरिच्यते चेत्तर्हि समूहालंबने नीलाकारे पि पीताकारः स्यात्॥ स्वरूपतो विज्ञानस्या
विशेषात्॥ अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेन्न॥ नीलत्वादीनां विरुद्धानामेकस्मिन्नसमावेशात्॥ इतरथा विरोधावधा
रणस्यैव दुरुपपन्नत्वात्॥ न वा वासनासंक्रमः सम्भवति॥ मातृपुत्रयोरपि वासनासंक्रमप्रसङ्गात्॥ न चोपादानोपादेयभावो नि
यामक इति वाच्यम्॥ वासनायाः संक्रमासंभवात्॥ उत्तरस्मिन्नुत्पत्तिरेव संक्रम इति चेन्न॥ तदुत्पादकाभावात्॥ चित्तमेवोत्पादक
त्वे तदा संस्कारानन्त्यप्रसङ्गः॥ क्षणिकविज्ञानेऽप्यतिशयविशेषः कल्प्यत इति चेन्न॥ मानाभावात्॥ कल्पनागौरवाच्च॥ एतेन क्ष
णिकशरीरेष्वेव चैतन्यमपि प्रत्युक्तम्॥ गौरवात्॥ अतिशये मानाभावाच्च॥ बीजादावपि सहकारिसमवधानासमवधानाभ्या
मेवोपपत्तेः। कुर्वद्रूपत्वाकल्पनात्॥ अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा॥ अविनाशी वा अरेऽयमात्मा सत्यं ज्ञा
नमानन्दं ब्रह्मेत्यादिश्रुतेश्चेति चेन्न॥ तस्य सविषयत्वे त्वसम्भवस्य दर्शितत्वात्॥ निर्विषयस्य ज्ञानत्वे मानाभावात्॥ सविषयक
त्वस्याप्यनुभवात्॥ अतो ज्ञानभिन्नो नित्य आत्मेति सिद्धम्॥ सत्यं ज्ञानमानन्दमिति ब्रह्म परं जीवेषु नोपयुज्यते ज्ञानाज्ञान
सुखित्वदुःखित्वाभ्यां जीवानां परस्परभेदसिद्धौ सुतरामीश्वरभेदः॥ अन्यथा बन्धमोक्षानुपपत्तेः॥ योऽपीश्वराभेदप्रतिपाद
को वेदः सोऽपि तद्भेदेन तदीयत्वं प्रतिपादयन्स्तौति॥ अभेदभावनयैव ज्ञातव्यमिति वदति॥ अत एव सर्व एवात्मानः सम

सि·मु·
१४

र्पिताइतिश्रूयते॥मोक्षदशायामज्ञाननिवृत्तावभेदोजायतइत्यपिन॥भेदस्यनित्यत्वेननाशायोगात्॥भेदनाशेपिव्यक्तिद्वयंस्थास्य
त्येव॥नचद्वित्वमपिनश्यतीतिवाच्यम्॥तत्रनिर्धर्मकेब्रह्मणिसत्यत्वाभावेपिसत्यस्वरूपंतदितिवद्द्वित्वाभावेपिद्व्यात्मकतावि
त्तिसुवचत्वात्॥मिथ्यात्वाभावोऽधिकरणात्मकस्तच्चसत्यत्वमितिचेत्॥एकत्वाभावोव्यक्तिद्वयात्मकोद्वित्वमप्युच्यताम्॥प्र
त्येकमेकत्वेपिपृथिवीजलयोर्नगन्धइतिवदुभयंनैकमित्यस्यसर्वजनसिद्धत्वात्॥योपितदानीमभेदप्रतिपादकआगमःसो
पिनिर्दुःखत्वादिनासाम्यंप्रतिपादयति॥सम्पदाधिक्येपुरोहितोयंराजासंवृत्तइतिवत्॥अतएवनिरञ्जनःपरमंसाम्यमुपैतीति
श्रूयते॥ईश्वरोपिनज्ञानसुखात्मा॥किन्तुज्ञानाद्याश्रयः॥नित्यंज्ञानमानन्दंब्रह्मेत्यादौविज्ञानपदेनज्ञानाद्याश्रयएवोक्तः॥य
सर्वज्ञइत्याद्यनुरोधात्॥आनन्दमित्यस्याप्यानन्दवदित्यर्थः॥आनन्दोपिदुःखाभावेउपचर्यते॥भाराद्यपगमेसुखीसंवृत्तो
हमितिवत्॥अस्तुवातस्मिन्नानन्दोनत्वसावानन्दः॥असुखमितिश्रुतेः॥नविद्यतेसुखंयस्येतिकुतोनार्थइतिचेन्न॥क्लिष्टक
ल्पनापत्तेः॥प्रकरणविरोधाच्च॥आनन्दमित्यत्रमत्वर्थीयप्रत्ययनिरोधाच्चेतिसंक्षेपः॥एतेनप्रकृतिःकर्त्रीपुरुषःपुष्करपलाश
वन्निर्लेपः॥किन्तुचेतनः॥कार्यकारणयोरभेदात्कार्यनाशेसतिकार्यरूपतयातन्नाशोनस्यादित्यकारणत्वम्॥तस्यबुद्धिगतचैतन्या
भिमानान्यथानुपपत्त्यातत्कल्पनम्॥बुद्धिश्चप्रकृतेःपरिणामः॥सैवमहत्तत्त्वमन्तःकरणमित्युच्यते॥तत्सत्त्वासत्त्वाभ्यांपुरु
षस्यसंसारापवर्गौ॥तस्याएवेन्द्रियप्रणालिकयापरिणतिर्ज्ञानरूपाघटादिनासम्बन्धः॥पुरुषेकर्तृत्वाभिमानोबुद्धौचैतन्याभि
मानश्चाभेदाग्रहात्॥ममेदंकर्तव्यमितिमदंशःपुरुषोपरागः॥बुद्धेःस्वच्छतयाचेतनप्रतिबिम्बादतात्त्विकः॥दर्पणस्येवमु
खोपरागः॥इदमितिविषयोपरागः॥इन्द्रियप्रणालिकयापरिणतिभेदस्तुतात्त्विकः॥निश्वासाभिहतदर्पणस्येवमलिनिमा।

राम·
१४

कर्त्तव्यमित्तिव्यापारावेशः तेनांशत्रयवती बुद्धिस्तत्परिणामेनज्ञानेनपुरुषस्यातात्त्विकः सम्बन्धः ॥ दर्पणमलिनिम्नेवमुखस्योपलब्धिरुच्यते ॥ ज्ञानवत्सुखदुःखेच्छाद्वेषप्रयत्न धर्माधर्मा अपिबुद्धेरेव ॥ कृतिसामानाधिकरण्येनप्रतीतेः ॥ नचबुद्धिश्चेतनापरिणामित्वादितिमतमपास्तम् ॥ कृत्यदृष्टभोगानामिवचैतन्यस्यापिसामानाधिकरण्यप्रतीतेः ॥ तद्भिन्नेमानाभावात् ॥ चेतनोहंकरोमीतिप्रतीतेः ॥ चैतन्यांशेभ्रमइतिचेत्कृत्यंशेपिकिंनेष्यते ॥ अन्यथाबुद्धेर्नित्यत्वेमोक्षाभावो अनित्यत्वेतत्पूर्वमसंसारापत्तिः ॥ अचेतनायाः प्रकृतेः कार्यत्वात् बुद्धेरचैतन्यम् ॥ कार्यकारणयोस्तादात्म्यादितिचेन्न ॥ असिद्धेः ॥ कर्तृजेन्यत्वेमानाभावात् ॥ वीतरागजन्मादर्शनादनादित्वम् ॥ अनादिभावस्यनाशासम्भवान्नित्यत्वम् ॥ तत्किंप्रकृत्यादिकल्पनेन ॥ नचप्रकृतेः क्रियमाणानिगुणैःकर्माणि सर्वशः ॥ अहंकारविमूढात्माकर्त्ताहमितिमन्यते इत्यनेनविरोधइतिवाच्यम् ःप्रकृतेः अदृष्टस्यगुणैः अदृष्टजन्यैरिच्छादिभिःकर्त्ताहअहमेवेत्यस्यतदर्थत्वात् ॥ तत्रैवंसतिकर्त्तारमात्मानंकेवलंतुयइत्यादिवदत्तभगवताप्रकटीकृतोयमर्थइपरिष्टादाशयइतिसंक्षेपः ॥ धर्माधर्माश्रयइति ॥ आत्मेत्यनुषज्यते ॥ शरीरस्यतदाश्रयत्वेदेहांतरकृतकर्मणोदेहांतरभोगानुपपत्तेः ॥ विशेषगुणयोगतइति ॥ योग्यविशेषगुणस्यज्ञानसुखादेःसम्बन्धेनआत्मनःप्रत्यक्षंभवति ॥ नत्वन्यथा ॥ अहंजानेअहंकरोमीत्यादिप्रतीतेः ॥ केवलात्मविषयकप्रतीतेरननुभवात् ५० परस्यात्मात्वनुमीयतइत्याहप्रवृत्तीति ॥ आत्मापरदेहादौप्रवृत्त्यादिनानुमीयते ॥ प्रवृत्तिरत्रचेष्टा ॥ ज्ञानेच्छाप्रयत्नादीनांदेहेअभावस्योक्तप्रायत्वाच्चेष्टायप्रयत्नसाध्यत्वाच्चेष्टयाप्रयत्नवानात्मानुमीयतइतिभावः ॥ अत्रदृष्टान्तमाह ॥ रथेति ॥ यद्यपिरथकर्मचेष्टानभवति ॥ ॥

धर्माधर्माश्रयोऽध्यक्षोविशेषगुणयोगतः ॥५०॥ प्रवृत्याद्यनुमेयोऽयंरथगत्येवसारथिः ॥

सि॰ सं॰ १५ तथापि तेन कर्मणा सारथिर्यथानुमीयते तथा चेष्टात्मकेन कर्मणा परात्मानुमीयत इति भावः॥ अहंकारस्येति॥ अहंकारोऽहमिति
प्रत्ययस्तस्य आश्रयो विषय आत्मा न शरीरादिरिति॥ मन इति॥ मनोभिन्नेन्द्रियं प्रत्यक्षाविषयः मानसप्रत्यक्षविषय इत्यर्थः।
रूपाद्यभावेन इन्द्रियान्तरायोग्यत्वात् ५१ विभुरिति॥ विभुत्वं परममहत्त्वम्॥ तच्च पूर्वमुक्तमपि स्पष्टार्थमुक्तम्॥ बुद्ध्यादीति॥ बुद्धिसु
खदुःखेच्छादय श्चतुर्दशगुणाः पूर्वोक्ता वेदितव्याः॥ अत्रैव प्रसंगात्क्रमप्राप्तं बुद्धेः प्रपंचं दर्शयति॥ बुद्धिस्त्विति॥ द्वैविध्यं व्युत्पाद
यति॥ अनुभूतिरिति॥ अनुभूतिश्चतुर्विधेति॥ एतासां च तसृणां करणानि चत्वारि प्रमाणानि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणा
नि सूत्रोक्तानि वेदितव्यानि ५२ प्रत्यक्षमिति॥ तत्र इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्॥ यद्यपि मनोरूपेंद्रियजन्यं सर्वमेव ज्ञानं भवति तथापि

अहंकारस्याश्रयोयं मनोमात्रस्य गोचरः॥ ५१॥ विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता॥ अनुभूतिः स्मृति
श्च स्यादनुभूतिश्चतुर्विधा॥ ५२॥ प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे॥ ८८ इन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने कर

णत्वं तत्प्रत्यक्षमिति विवक्षितम्॥ ईश्वरप्रत्यक्षं तु न लक्ष्यम्॥ इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यजन्यज्ञानाव्यभिचारिव्य
वसायात्मकं प्रत्यक्षमिति सूत्रे तथैवोक्तत्वात्॥ अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम्॥ इदं लक्षणं ईश्वरप्रत्यक्षसाधारणम्॥ अनुमि
तौ व्याप्तिज्ञानस्य उपमितौ सादृश्यज्ञानस्य शाब्दबोधे पदज्ञानस्य स्मरणे अनुभवस्य करणत्वान्न तत्रातिव्याप्तिः॥ परामर्शजन्यं ज्ञा
नमनुमितिः॥ यद्यपि परामर्शप्रत्यक्षादिकं परामर्शजन्यं तथापि परामर्शजन्यं हेत्वविषयकं ज्ञानमनुमितिः॥ न च कादाचि राम॰
त्कहेत्वविषयकानुमितावव्याप्तिः॥ तादृशज्ञानवृत्तिअनुभवत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्॥ अथवा व्याप्तिज्ञानक। १५

१६ रणकंज्ञानमनुमितिः॥एवंसादृश्यज्ञानकरणकंज्ञानमुपमितिः॥पदज्ञानकरणकंज्ञानंशाब्दबोधः॥वस्तुतोयत्किंचिदनुमिति
व्यक्तिमादायतद्व्यक्तिवृत्तिप्रत्यक्षावृत्तिजातिमत्त्वमनुमितित्वम्॥एवंयत्किंचित्प्रत्यक्षादिकमादायतद्व्यक्तिवृत्तिअनुमित्यवृत्तिजातिम
त्त्वंप्रत्यक्षत्वादिकंवाच्यमिति॥जन्यप्रत्यक्षंविभजते घ्राणजादीति॥घ्राणजंरासनंचाक्षुषंस्पार्शनंश्रौत्रंमानसमितिषड्विधंप्रत्यक्षम्॥ ––
नचेश्वरप्रत्यक्ष – स्याविभजनात्न्यूनत्वम्॥जन्यप्रत्यक्षस्यैवनिरूपणीयत्वात्॥उक्तसूत्रानुसारात्॥५३॥ घ्राणस्यगोचरइति॥घ्रा
णग्राह्यइत्यर्थः॥गन्धत्वादिरिति॥आदिपदात्सुरभित्वासुरभित्वादिपरिग्रहः॥गन्धस्यप्रत्यक्षत्वात्तद्वृत्तिजातिरपिप्रत्यक्षा॥

घ्राणजादिप्रभेदेनप्रत्यक्षंषड्विधंमतम्॥५३॥घ्राणस्यगोचरोगन्धोगन्धत्वादिरपिस्मृतः॥तथारसोरसज्ञायास्त
थाशब्दोपिचश्रुतेः॥५४॥उद्भूतरूपंनयनस्यगोचरोद्रव्याणितद्वन्तिपृथक्त्वसंख्ये॥विभागसंयोगपरापरत्वस्नेहद्रवत्वंपरिमा
णयुक्तम्॥५५॥क्रियाजातिर्योग्यवृत्तिःसमवायश्चतादृशः॥गृह्णातिचक्षुःसम्बन्धादालोकोद्भूतरूपयोः॥५६॥उद्भूत
स्पर्शवद्द्रव्यंगोचरःसोपिचत्वचः॥

गन्धाश्रयग्रहणेतुघ्राणस्यासामर्थ्यमितिबोध्यम्॥तथारसइति॥रसत्वादिसहितइत्य
र्थः॥तथाशब्दत्वादिसहितः॥गन्धोरसश्चोद्भूतोबोध्यः॥५४॥उद्भूतरूपमिति॥ग्रीष्मोष्मादेरनुद्भूतरूपमितिनतत्प्रत्यक्षम्॥तद्वन्तिउद्भूत
रूपवन्ति॥५५॥योग्येति॥पृथक्त्वादिकमपियोग्यव्यक्तिवृत्तिबोध्यम्॥तादृशंयोग्यव्यक्तिवृत्तिरित्यर्थः॥चक्षुर्योग्यत्वमेवकथंतदाह॥
गृह्णातीति॥आलोकसंयोगोद्भूतरूपञ्चचाक्षुषप्रत्यक्षेकारणम्॥तत्रद्रव्यचाक्षुषंप्रतितयोःस्वाश्रयसमवायसम्बन्धेनकारणत्वम्॥
द्रव्यसमवेतरूपादिप्रत्यक्षेस्वाश्रयसमवायेन॥द्रव्यसमवेतसमवेतरूपत्वादेःप्रत्यक्षेस्वाश्रयसमवेतसमवायसंबन्धेनेति॥५६॥उद्भूतस्य

सि॰मु॰ ॥सोपि उद्भूतस्पर्शोपि स्पर्शत्वादिसहितः॥रूपान्यदिति॥रूपत्वादिभिन्नं यच्चक्षुषो योग्यं तत्त्वगिन्द्रियस्यापि ग्राह्यम्॥तथा च पृथक्त्व
१६ संख्यादयो ये चक्षुर्ग्राह्या गुणा उक्ताः एवं क्रिया जातयो योग्यव्यक्तिवृत्तयश्च त्वचो ग्राह्या इति॥अत्रापि त्वगिन्द्रियजन्येपि द्रव्यप्रत्य
क्षे रूपं कारणमिति॥तथा च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणमिति॥नवीनास्तु बहिर्द्रव्यप्रत्यक्षे न रूपं कारणं प्रमाणाभावात्॥
किन्तु चाक्षुषप्रत्यक्षे रूपं स्पार्शनप्रत्यक्षे स्पर्शः कारणं अन्वयव्यतिरेकात्॥बहिर्द्रव्यप्रत्यक्षमात्रे किं कारणमिति चेत्॥न किंचित्॥
आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वं वा प्रयोजकमस्तु॥रूपस्य कारणत्वे लाघवमिति चेन्न॥वायोस्त्वगिन्द्रियेणाग्रहणप्रसङ्गात्॥
इष्टापत्तिरिति चेन्न॥स्पर्श एव लाघवात्कारणमस्तु॥प्रभाया अप्रत्यक्षत्वमिष्टापत्तिरेव किं न स्यात्॥तस्मात्प्रभां पश्यामीतिवत् वायुं स्पृशा

रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम्॥५७॥द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणम्॥

मीति प्रत्ययस्य सत्त्वात् वायोरपि प्रत्यक्षं भवत्येव॥बहिर्द्रव्यप्रत्यक्षमात्रे तु न रूपस्य न वा स्पर्शस्य हेतुत्वम्॥वायुप्रभयोरेकत्वं
गृह्यत एव॥क्वचिद्द्वित्वादिकमपि॥क्वचित्संख्यापरिमाणाद्यग्रहो दोषादित्याहुः॥५७॥त्वचो योग इति॥त्वङ्मनःसंयोगो ज्ञानसा
मान्यकारणमित्यर्थः॥किं तत्र प्रमाणम्॥सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाजननमिति॥ननु सुषुप्ति
काले किं ज्ञानं भविष्यति॥अनुभवरूपं स्मरणं वा नाद्यः॥अनुभवसामग्र्यभावात्॥तथा हि॥चक्षुरादिना मनःसंयोगस्य हेतुत्वात्त
दभावादेव न चाक्षुषादिप्रत्यक्षम्॥ज्ञानादेरभावादेव न मानसं प्रत्यक्षम्॥ज्ञानाद्यभावे चात्मनोपि न प्रत्यक्षम्॥व्याप्तिज्ञा राम॰
नाभावादेव नानुमितिः॥सादृश्यज्ञानाभावान्नोपमितिः॥पदज्ञानाभावान्न शाब्दबोधः॥इत्यनुभवसामग्र्यभावान्नानुभवः॥ १६

उद्बोधकाभावाच्चनस्मरणम्॥मैवम्॥सुषुप्तिप्राक्कालोत्पन्नेच्छादिव्यक्तेस्तत्सम्बन्धेनात्मनश्चप्रत्यक्षत्वप्रसङ्गात्॥तदतीन्द्रियत्वे मानाभावात्सुषुप्तिप्राक्कालेनिर्विकल्पकमेवनियमेनजायतइत्यत्रापिप्रमाणाभावात्॥अथज्ञानमात्रेत्वङ्मनःसंयोगस्ययदिकारणत्वंतदा रासनचाक्षुषादिप्रत्यक्षकालेत्वाचप्रत्यक्षंस्यात्॥विषयत्वक्संयोगस्यत्वङ्मनःसंयोगस्यचसत्त्वात्॥परस्परप्रतिबंधादेकमपिवान स्यादितिअत्रकेचित्॥पूर्वोक्तयुक्त्यात्वङ्मनःसंयोगस्यहेतुत्वेसिद्धेचाक्षुषादिसामग्र्याःस्पार्शनादिप्रतिबन्धकत्वमनुभवानुरोधात्कल्प्य तइति॥अन्येतु॥सुषुप्त्यनुरोधाच्चर्ममनःसंयोगस्यज्ञानहेतुत्वंकल्प्यम्॥चाक्षुषादिप्रत्यक्षकालेत्वङ्मनःसंयोगस्याभावान्नत्वाच प्रत्यक्षमितिवदन्ति॥मनोग्राह्यमिति॥मनोजन्यप्रत्यक्षविषयः॥मतिर्ज्ञानम्॥कृतिर्यत्नः॥एवंसुखत्वादिकंमनोग्राह्यम्॥एवमा

मनोग्राह्यंसुखंदुःखमिच्छाद्वेषोमतिःकृतिः॥५८॥ज्ञानंयन्निर्विकल्पाख्यंतदतीन्द्रियमिष्यते॥

त्मापिमनोग्राह्यः॥किन्तुमनोमात्रस्यगोचरइत्यनेनपूर्वमुक्तत्वादत्रनोक्तः॥निर्विकल्पाख्यमिति॥चक्षुःसंयोगाद्यनन्तरंघटइत्या कारकंघटत्वादिविशिष्टज्ञानंनसम्भवति॥पूर्वंविशेषणस्यघटत्वादेर्ज्ञानाभावात्॥विशिष्टबुद्धौविशेषणज्ञानस्यकारणत्वात्॥तथा चप्रथमतोघटघटत्वयोर्वैशिष्ट्यानवगाहिज्ञानंजायते॥तदेवनिर्विकल्पकम्॥तच्चनिर्विकल्पकंनप्रत्यक्षम्॥तथाहि॥वैशिष्ट्यान वगाहिज्ञानस्यप्रत्यक्षंनभवति॥घटमहंजानामीतिप्रत्ययात्॥तत्रआत्मनिज्ञानंप्रकारीभूयभासते॥ज्ञानेघटस्तत्रघटत्वंप्रकारोयःसए वविशेषणमित्युच्यते॥विशेषणेयद्विशेषणंतद्विशेषणतावच्छेदकमित्युच्यते॥विशेषणतावच्छेदकप्रकारकंज्ञानंविशिष्टवैशि ष्ट्यज्ञानेकारणम्॥निर्विकल्पकेचघटत्वादिकंनप्रकारस्तेनघटत्वादिविशिष्टंघटादिवैशिष्ट्यभानंज्ञानेनसम्भवति॥घटत्वाद्यप्रका

कं चघटादिविशिष्टज्ञानंनसंभवति॥



जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात्॥ महत्त्वं षड्विधमिति॥ द्रव्यप्रत्यक्षे महत्त्वं समवायसंबंधेन कारणम्॥ द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसम्बन्धेन॥ द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वरूपत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन॥ इन्द्रियमिति॥ अत्रापि षड्विध इत्यनुषज्यते॥ इंद्रियत्वं तु न जातिः॥ पृथिवीत्वादिना साङ्कर्यात्॥ किन्तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम्॥ आत्मादिवारणाय सत्यंतम्॥ उद्भूतविशेषगुणस्य श्रोत्रेपि सत्वाच्छब्देतरेति॥ विशेषगुणस्वरूपादेश्चक्षुरादावपि सत्वादुद्भूतेति॥ उद्भूतत्वं न जातिः॥ शुक्लत्वादिना सङ्करात्॥ न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्॥ उद्भूतरूपत्वादिना चाक्षुषादौ हेतुत्वानुपपत्तेः॥ किन्तु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्त्वं तदभावकूटश्चोद्भूतत्वम्॥ तच्च संयोगादाव

**महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम्॥ ५९॥ विषयेन्द्रियसंबंधो व्यापारः सोपि षड्विधः॥**

प्यस्ति तथा च शब्देतरोद्भूतगुणसंयोगादिश्चक्षुरादावप्यस्त्यतो विशेषेति॥ कालादिवारणाय विशेष्यदलम्॥ इन्द्रियावयवविषयसंयोगस्यापि प्राचांमते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय॥ नवीनमते कालादौ रूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेर्वारणाय वा मनःपदम्॥ ज्ञानकारणमित्यपि तद्वारणाय॥ करणमिति॥ असाधारणं कारणं करणम्॥ असाधारणत्वं व्यापारवत्त्वम्॥ ५९॥ विषयेन्द्रियसम्बन्धो व्यापार इति॥ व्यापारः सन्निकर्षः॥ षड्विधं सन्निकर्षमुदाहरणद्वारा प्रदर्शयति॥ ॥ द्रव्यग्रह स्तु संयोगादिति॥ ॥ द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम्॥ द्रव्यसमवेत

प्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम्॥ एवमग्रेपि ॥६०॥६१॥ वस्तुतस्तु द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चक्षुःसंयोगः कारणम्॥ द्रव्यसम
वेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणम्॥ द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः कारणम्॥ एवमन्यत्रापि
विशिष्यैव कार्यकारणभावः॥ परन्तु पृथिवीपरमाणुनीले नीलत्वं पृथिवीपरमाणौ पृथिवीत्वं च चक्षुषा कथं न गृह्यते तत्र परम्परयोद्भूत
रूपसम्वन्धस्य महत्त्वसम्वन्धस्य च सत्त्वात्॥ तथाहि॥ नीलत्वंजातिरेकैव परमाणुनीले घटनीले च वर्त्तते॥ तथा च महत्त्वसम्वन्धो घटनील
मादाय वर्त्तते रूपसम्वन्धस्तु उभयमादाय वर्त्तते ॥ एवं पृथिवीत्वेपि घटादिकमादाय महत्त्वसंवन्धो वोध्यः ॥ एवं वायौ तदीयस्पर्शादौ च स
त्तायाश्चाक्षुषप्रत्यक्षं स्यात् तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतप्रत्यक्षे कारणत्वं॥ तादृशचक्षुः

द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥६०॥ द्रव्येषु समवेतानां तथा तत्समवायतः ॥ तत्रापि समवेतानां शब्दस्य
समवायतः ॥६१॥ तत्वृत्तीनां समवेतसमवायेन तु ग्रहः ॥ विशेषणतया तद्वदभावानां ग्रहो भवेत्॥ ६२ ॥ ॥

संयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतप्रत्यक्षे कारणत्वं वाच्यम् ॥ इत्थञ्च परमाणुनीलादौ न नीलत्वादिग्रहः ॥ परमाणुचक्षुः
संयोगस्य महत्त्वावच्छिन्नत्वाभावात् ॥ एवं वाय्वादौ न सत्तादिचाक्षुषम् ॥ तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात्॥ एवं यत्र घ
टस्य पृष्ठावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्त्वग्रावच्छेदेन तत्र घटप्रत्यक्षाभावात् आलोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे वि
शेषणं वोध्यम्॥ एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणम् ॥ द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः कारणम्॥ द्र
व्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम् ॥ अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्व

सिद्धा १८ चपूर्ववदेवबोध्यम्॥ एवंगन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः॥ रसप्रत्यक्षेरसनासंयुक्तसमवायः॥ गन्धसमवेतस्यघ्राणजन्यप्र
त्यक्षे घ्राणसंयुक्तसमवेतसमवायः॥ रसस्समवेतस्यरासनप्रत्यक्षेरसनासंयुक्तसमवेतसमवायः कारणम्॥ शब्दप्रत्यक्षेश्रोत्रावच्छि
न्नसमवायः॥ शब्दसमवेतस्यश्रावणप्रत्यक्षेश्रोत्रावच्छिन्नसमवेतसमवायः॥ अत्रसर्वत्रप्रत्यक्षंलौकिकंबोध्यम्॥ वक्ष्यमाणम
लौकिकप्रत्यक्षमिन्द्रियसंयोगंविनापिभवति॥ एवमात्मप्रत्यक्षेमनःसंयोगः॥ आत्मसमवेतमानसप्रत्यक्षेमनःसंयुक्तसमवायः॥
आत्मसमवेतसमवेतमानसप्रत्यक्षेमनःसंयुक्तसमवेतसमवायःकारणं॥ अभावप्रत्यक्षेसमवायप्रत्यक्षेचेन्द्रियसंबद्धविशेषणताहेतुः॥
वैशेषिकमतेतुसमवायोनप्रत्यक्षः॥ अत्रयद्यपिविशेषणतानानाविधा॥ तथाहि॥ भूतलादौघटाभावःसंयुक्तविशेषणतयागृह्यते॥ संख्या

यदिस्यादुपलभ्येतेत्येवंयत्रप्रसज्यते॥ प्रत्यक्षंसमवायस्यविशेषणतयाभवेत्॥ ६३॥ दौचरूपाद्यभावःसंयुक्तसमवेतवि

शेषणतयागृह्यते। संख्यात्वादौरूपाद्यभावःसंयुक्तसमवेतसमवेतविशेषणतया। शब्दाभावःकेवलश्रोत्रावच्छिन्नविशेषणतयागृह्यते।
कत्वेखत्वाद्यभावःश्रोत्रावच्छिन्नसमवेतविशेषणतया॥ एवंकत्वावच्छिन्नाभावेखत्वाभावादिकंविशेषणविशेषणतयागृह्यते। घटाभा
वादौघटाभावःसंयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यं तथापिविशेषणत्वत्वेनैकैवसागृह्यते। अन्यथाषोढासन्निकर्षइतिप्राचांप्र
वादोहन्येतइति॥ ६२॥ यदिस्यादिति॥ अभावप्रत्यक्षेयोग्यानुपलब्धिःकारणम्॥ तथाहि॥ भूतलादौघटादिज्ञानेजातेघटाभावादिकंनज्ञा
यते॥ तेनाऽभावोपलम्भेप्रतियोग्युपलम्भाभावःकारणम्॥ तत्रयोग्यताप्यपेक्षिता॥ सापिप्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिक राम १८
त्वरूपा तदर्थश्चप्रतियोगिनोघटादेःसत्त्वप्रसक्त्याप्रसञ्जितउपलम्भरूपा प्रतियोगियस्यसउपलम्भाभावोअभावप्रत्यक्षेहेतुः॥

तथाहि॥ यत्र आलोकसंयोगादिकं वर्त्तते तत्र यद्यत्र घटः स्यात् तर्हि उपलभ्येतेति आपादयितुं शक्यते॥ तत्र घटाभावादिकं प्रत्यक्षं भवति॥ अन्धका
रे तु नापादयितुं शक्यते तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्॥ स्पार्शनप्रत्यक्षं तु भवत्येव॥ आलोकसंबन्धं विनापि स्पार्शनप्रत्यक्षस्यापादयि
तुं शक्यत्वात्॥ गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षः॥ तत्र गुरुत्वस्यापादयितुमशक्यत्वात्॥ वायौ उद्भूतरूपाभावः पाषाणे सौरभाभावः
गुडे तिक्ताभावः वन्हावनुष्णत्वाभावः श्रोत्रे शब्दाभावः आत्मनि सुखाद्यभावः एवमादयस्तत्तदिंद्रियैर्गृह्यंते॥ तत्र तत्तत्प्रत्यक्षस्यापादयितुं
शक्यत्वात्॥ संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता॥ अन्योन्याभावप्रत्यक्षे अधिकरणयोग्यत्वमपेक्षितम्॥ अतस्तम्भादौ पिशाचादिभेदो
पि चक्षुषा गृह्यत एव॥ ६३॥ प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम्॥ तत्र लौकिकप्रत्यक्षे षोढाः सन्निकर्षा उक्ताः॥ अलौकिकप्रत्यक्षे सन्नि

अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्त्तितः॥ सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा॥ ६४॥

कर्षाः निदानीं वदति॥ अलौकिकस्तु व्यापार इति॥ व्यापारः सन्निकर्षः॥ सामान्यलक्षण इति॥ सामान्यं लक्षणं यस्येत्यर्थः॥ तत्र लक्षणपदेन य
दि स्वरूपमुच्यते। तदा सामान्यस्वरूपं प्रत्यासत्तिरित्यर्थो लभ्यते॥ तच्च इन्द्रियसंबद्धविशेष्यकज्ञाने प्रकारीभूतं बोध्यम्॥ तथाहि॥ यत्रेन्द्रिय
संयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं जातं तत्र ज्ञाने धूमत्वं प्रकारः तत्र धूमत्वेन सन्निकर्षेण धूमा इत्येवं सकलधूमविषयकं ज्ञानं जाय
ते॥ अत्र यदि इन्द्रियसंबद्धमित्येवोच्यते तदा यत्र धूलीपटले धूम इति विज्ञातं तत्रैतेन सन्निकर्षेण सकलधूमविषयकं ज्ञानं न स्यात्॥ तत्र धू
मत्वेन सह इन्द्रियसंबन्धाभावात्॥ मन्मते त्विन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानं तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः॥ इन्द्रि
यसंबन्धश्चालौकिको ग्राह्यः॥ इदं च बहिरिन्द्रियस्थले॥ मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः॥ ६४॥ परन्तु समानानां भावः।

सि॰मु॰ सामान्यंतत्त्वञ्चक्वचिन्नित्यंधूमत्वादि॥क्वचिज्ज्ञानित्यंघटादि॥यत्रैकोघटःसंयोगसंबन्धेनभूतलेसमवायसम्बन्धेनकपालेवाज्ञातस्तदनंतरंसर्वेषां
१९ तद्घटवतांभूतलादीनांकपालानांवाज्ञानंभवतितत्रेदंबोध्यम्॥यस्तुसामान्यंयेनसंबन्धेनज्ञायतेतेनसंबन्धेनाधिकरणानांप्रत्यासत्तिः॥किं
तुयत्रतद्घटनाशानंतरंतद्घटवतःस्मरणंजातंतत्रसामान्यलक्षणयासर्वेषांतद्घटवतांभानंनस्यात्॥सामान्यस्यतदानीमभावात्॥किंचइन्द्रियसंबद्धवि
शेष्यकंघटइतिज्ञानंयत्रजातंतत्रपरदिनेइन्द्रियसंबंधंविनापितादृशज्ञानप्रकारीभूतसामान्यस्यसत्वात्सकलघटविषयकंज्ञानंकुतोनजायते॥त
स्मात्सामान्यज्ञानंप्रत्यासत्तिर्नतुसामान्यमित्याह॥आसत्तिरिति॥प्रत्यासत्तिरित्यर्थः॥तथाचसामान्यलक्षणेत्यत्रलक्षणशब्दस्यविषयोऽर्थः॥तेनसा
मान्यविषयकंज्ञानंप्रत्यासत्तिरित्यर्थोलभ्यते॥ननुचक्षुःसंयोगादिकंविनापिसामान्यज्ञानंयत्रवर्त्ततेतत्रसकलघटादीनांचाक्षुषप्रत्यक्षंस्यादत

आसत्तिराश्रयाणांतुसामान्यज्ञानमिष्यते॥तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्षते॥६५॥विषयीयस्यतस्यैवव्यापारोज्ञानलक्षणः

यद्विशेष्यकज्ञानंतद्धर्मिधर्मात्यर्थः ... ज्ञानमित्यर्थः

आह॥तदिन्द्रियजेति॥अस्यार्थः॥यदावहिरिन्द्रियेणसामान्यलक्षणयाज्ञानंजननीयंतदायत्किंचिद्धर्मिणितत्सामान्यज्ञानस्यतदिन्द्रियजन्यज्ञानसा
मग्र्यपेक्षिता॥साचसामग्रीचक्षुःसंयोगालोकसंयोगादिका॥तेनान्धकारेचक्षुरादिनातादृशज्ञानंनजायते॥६५॥ननुज्ञानलक्षणाप्रत्यासत्ति
र्ज्ञानरूपासामान्यलक्षणापियदिज्ञानरूपातदातयोर्भेदोनस्यादतआह॥विषयीयस्येति॥सामान्यलक्षणाप्र त्यासत्तिर्हितदाश्रयस्यज्ञानंज
नयति॥ज्ञानलक्षणाप्रत्यासत्तिस्तुयद्विषयकंज्ञानंतस्यैवप्रत्यासत्तिरिति॥अत्रायमर्थः॥प्रत्यक्षेसन्निकर्षंविनाभानंनसम्भवति॥धूम
त्वेनसकलधूमानांवन्हित्वेनसकलवन्हीनांचकथंज्ञानंभविष्यतितदर्थंसामान्यलक्षणास्वीक्रियते॥नचसकलवन्हिधूमभानाभावेका राम॰
क्षतिरितिवाच्यम्॥प्रत्यक्षधूमेवन्हिसंबन्धस्यगृहीतत्वात्।अन्यधूमस्यचानुपस्थितत्वाद्धूमोवन्हिव्याप्योनवेतिसंशयानुपपत्तेः॥। १९

ज्ञानविषयकं ज्ञानमनुव्यवसायः ४

मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयवन्हिव्याप्यत्वसंदेहः सम्भवति॥ न च सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञतापत्तिरिति वाच्यम्॥ प्रमेयत्वेन सकलज्ञाने जातेपि विशिष्य सकलपदार्थानामज्ञातत्वेन सार्वज्ञत्वाभावात्॥ एवं ज्ञानलक्षणाया अस्वीकारे सुरभिचन्दनमिति ज्ञाने सौरभ्यभानं कथं स्यात्॥ अत्र यद्यपि सामान्यलक्षणयापि सौरभस्य भानं सम्भवति तथापि सौरभत्वस्य भानं ज्ञानलक्षणया॥ एवं धूमत्वेन धूलीपटले यत्र ज्ञाते तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया॥ योगिनो द्विविधा इति॥ युक्ताः युंजानाश्च॥ अतो योगजधर्मस्यापि द्वैविध्यम्॥ युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति॥ द्वितीयस्य चिन्ताविशेषोपि सहकारी॥ ६६॥ प्रत्यक्षखण्डं समाप्तम्॥ ॥

योगिनो द्विविधाः प्रोक्ता युक्तयुंजानभेदतः॥ ६६॥ युक्तस्य सर्वदा भानं चिन्तासहकृतो परः॥ व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत्॥ ६७॥ अनुमायां ज्ञायमानं लिंगं तु करणं न हि॥ अनागतादिलिङ्गेन न स्यादनुमितिस्तदा॥ ६८॥

अनुमितिं व्युत्पादयति॥ व्यापारस्त्विति॥ अनुमितौ व्याप्तिज्ञानं करणं परामर्शो व्यापारः तथा हि॥ येन पुरुषेण महानसादौ धूमे वन्हिव्याप्तिर्गृहीता पश्चाच्च स एव पुरुषः क्वचित्पर्वतादौ अविच्छिन्नमूलामभ्रलिहां धूमरेखां पश्यति तदनन्तरं धूमो वन्हिव्याप्य इत्येवंरूपं व्याप्तिस्मरणं तस्य भवति॥ पश्चाच्च वन्हिव्याप्यधूमवानयं पर्वत इति ज्ञानं भवति॥ स एव परामर्श इत्युच्यते॥ तदनन्तरं पर्वतो वन्हिमानिति ज्ञानं जायते तदेवानुमितिरिति॥ ६७॥ अत्र प्राचीना वदन्ति॥ व्याप्यत्वेन ज्ञायमानं धूमादिलिङ्गमनुमितिकरणमिति तद्दूषयति॥ ज्ञायमानमिति॥ लिङ्गस्यानुमितिअकरणत्वे युक्तिमाह॥ अनागतादीति॥ यद्यनुमितौ लिङ्गं करणं स्यात्॥ तदानागतेन विनष्टेन वा लिङ्गेनानुमितिर्न स्यात्॥

सिं॰मु॰ अनुमितिकरणस्य लिङ्गस्य तदानीमभावात् ॥ दृ०॥ व्याप्यस्येति॥ व्याप्तिविशिष्टस्य पक्षेण सह वैशिष्ट्यावगाहि ज्ञानमनुमितौ जनकम्॥
२० तच्च व्याप्यः पक्ष इति ज्ञानम्॥ पक्षो व्याप्यवानिति ज्ञानं वा॥ अनुमितिस्तु पक्षो व्याप्य इति ज्ञानात् पक्षे साध्य इत्याकारिका॥ पक्षो व्याप्यवानिति
ज्ञानात् पक्षः साध्यवानित्याकारिका॥ द्विविधादपि परामर्शात् पक्षः साध्यवानित्येवानुमितिरित्यन्ये॥ ननु वन्हिव्याप्यधूमवानयं पर्वत इति ज्ञा
नं विनापि यत्र पर्वतो धूमवानिति प्रत्यक्षं ततो वन्हिव्याप्यो धूम इति स्मरणम्॥ तत्र ज्ञानद्वयादेवानुमिति दर्शनाद्व्याप्तिविशिष्टवैशिष्ट्यावगा
हि ज्ञानं न सर्वत्र कारणम्॥ किन्तु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन हेतुत्वं आवश्यकत्वात्॥ विशिष्टज्ञानकल्पनागौरवाच्चे
ति चेन्न॥ व्याप्यतावच्छेदकाज्ञानेपि वन्हिव्याप्यवानिति ज्ञानादनुमित्यनुत्पत्तेः॥ लाघवाच्च व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनैव हेतु

व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ॥

त्वम्॥ किञ्च धूमवानयं पर्वत इति ज्ञानादनुमित्यापत्तिः॥ व्याप्यतावच्छेदकीभूत धूमत्वप्रकारकपक्षधर्मताज्ञानस्य सत्वात्॥ न च य
त्यमाण व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वं वाच्यम्॥ चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमित्यापत्तेः॥ यदि
तु तत्पुरुषीय यत्यमाण व्याप्यतावच्छेदकप्रकारक तत्पुरुषीय पक्षधर्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्युच्यते तदा अनन्तकार्यकारण
भावः॥ मन्मते तु समवायसम्बन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायेनानुमितिं जनयतीत्यर्थेनानन्तकार्यकारणभावः॥ यदि तु व्या
प्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानं च स्वतन्त्रकारणमित्युच्यते तदा कार्यकारणभावद्वयम्॥ वन्हिव्याप्यो धूम आलोकवान् पर्वत इति ज्ञा राम॰
नादप्यनुमित्यापत्तिः॥ इत्यञ्च यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयम्॥ फलमुखगौरवस्यादोषत्वात् ॥ ॥ ॥ २०

२१ व्याप्योनामव्याप्याश्रयस्तत्र व्याप्तिः केत्यतआह॥व्याप्तिरिति॥वह्निमान्धूमादित्यादौसाध्योवन्हिःसाध्यवान्महानसादिस्तदन्योजलह्रदा
दिस्तदवृत्तित्वं धूमस्येतिलक्षणसमन्वयः॥धूमवान्वह्नेरित्यादौसाध्यवदन्यस्मिन्नयःपिण्डादौवन्हेःसत्त्वान्नातिव्याप्तिः॥अत्रयेनसंब
न्धेनसाध्यन्तेनैवसम्बन्धेनसाध्यवान्बोध्यः॥अन्यथासमवायसंबन्धेनवन्हिमान्वह्नेरवयवस्तदन्योमहानसादिस्तत्रधूमस्यविद्यमान
त्वादव्याप्तिप्रसङ्गात्॥साध्यवदन्यःसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान्बोध्यः॥तेनयत्किञ्चिद्वन्हिमतोमहानसादेर्भिन्नेपर्वतादौ
धूमस्यसत्त्वेपिनक्षतिः॥येनसम्बन्धेनहेतुतातेनैवसम्बन्धेनसाध्यवदन्यावृत्तित्वंबोध्यम्॥तेनवन्हिमदन्यस्मिन्धूमावयवेधूमस्यस
मवायसंबन्धेनसत्त्वेपिनक्षतिः॥साध्यवदन्यावृत्तित्वंचसाध्यवदन्यवृत्तित्वसामान्याभावः॥तेनधूमवान्वन्हेरित्यत्रसाध्यवदन्यजल

व्याप्तिःसाध्यवदन्यस्मिन्नसम्बन्धउदाहृतः॥६९॥अथवाहेतुमन्निष्ठविरहाप्रतियोगिना॥साध्येनहेतोरैकाधिकरण्यंव्याप्तिरु
च्यते ७०

ह्रदादिवृत्तित्वाभावेपिनातिव्याप्तिः॥अत्रयद्यपिद्रव्यंगुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौविशिष्टसत्तायाःशुद्धसत्तायाश्चैक्यात्साध्य
वदन्यस्मिन्गुणादाववृत्तित्वंनास्तितथापिहेतुतावच्छेदकरूपेणावृत्तित्वंवाच्यम्॥हेतुतावच्छेदकंतादृशवृत्तितानवच्छेदकमितिफलितो
र्थः॥६९॥ननुकेवलान्वयिनिज्ञेयत्वादौसाध्येसाध्यवदन्यस्याप्रसिद्धत्वादव्याप्तिः॥किंचसत्तावान्जातेरित्यादौसाध्यवदन्यस्मिन्सामान्या
दौहेतुतावच्छेदकसंबन्धेनसमवायेनवृत्तेरप्रसिद्धत्वादव्याप्तिरतआह॥अथवेति॥हेतुमतिनिष्ठावृत्तिर्यस्यसतथाविरहोऽभावः॥तथा
चहेत्वधिकरणवृत्तिर्योऽभावस्तदप्रतियोगिनासाध्येनसहहेतोःसामानाधिकरण्यंव्याप्तिः॥यद्यपिवन्हिमान्धूमादित्यादौहेत्वधिकर
णपर्वतादिवृत्त्यभावप्रतियोगित्वंतत्तद्वह्न्यादेरस्तीत्यव्याप्तिः॥नचसमानाधिकरणवह्निधूमयोरेवव्याप्तिरितिवाच्यम्॥तत्तद्वह्न्यादेरप्य

भयाभावादिसत्त्वादेकसत्त्वेपिद्वयंनास्तीतिप्रतीतेः॥गुणवानद्रव्यत्वादित्यादावव्याप्तिश्च॥तथापिसाध्यतावच्छेदकंप्रतियोगितानवच्छेद
कंयत्तदवच्छिन्नसामानाधिकरण्यंव्याप्तिरितिवाच्यम्॥ननुरूपत्वव्याप्यजातिमद्वान्पृथिवीत्वादित्यत्रसाध्यतावच्छेदिकारूपत्वव्याप्यजात
यस्तासांचशुक्लत्वादिरूपाणांनीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरितिचेन्न॥तत्रपरम्परयारूपत्वव्याप्यजाति
त्वस्यैवसाध्यतावच्छेदकत्वात्॥नहितादृशधर्मावच्छिन्नाभावःक्वापिपृथिव्यामस्ति॥रूपत्वव्याप्यजातिमान्नास्तीतिप्रतीत्यापत्तेः॥सा
ध्यादिभेदेनव्याप्तेर्भेदात्तादृशस्थलेसाध्यतावच्छेदकतावच्छेदकंप्रतियोगितावच्छेदकतानवच्छेदकमित्येवलक्षणघटकमित्यपि
वदन्ति॥एवंदण्डादौसाध्येपरम्परयादण्डत्वस्यैवसाध्यतावच्छेदकत्वम्॥हेत्वधिकरणंचहेतुतावच्छेदकविशिष्टाधिकरणंवा
च्यम्॥तेनद्रव्यंगुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौशुद्धसत्त्वाधिकरणगुणनिष्ठाभावप्रतियोगित्वेपिद्रव्यत्वस्यनाव्याप्तिः॥हेतुता
वच्छेदकसम्बन्धेनहेत्वधिकरणंबोध्यम्॥तेनसमवायेनधूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेपिवह्नेर्नाव्याप्तिः॥अभावश्च
प्रतियोगिव्यधिकरणोबोध्यः॥तेनकपिसंयोगीएतद्वृक्षत्वादित्यत्रमूलावच्छेदेनएतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेपिकपिसं
योगस्यनाव्याप्तिः॥नचप्रतियोगिव्यधिकरणत्वंयदिप्रतियोग्यनधिकरणवृत्तित्वंतदातथैवाव्याप्तिः॥प्रतियोगिनःकपिसंयोगस्या
नधिकरणेगुणादौवर्त्ततेयोऽभावस्तस्यैववृक्षेमूलावच्छेदेनसत्त्वात्॥यदिप्रतियोग्यधिकरणावृत्तित्वंतदासंयोगीसत्त्वादित्यादावति
व्याप्तिः॥सत्ताधिकरणगुणादौयःसंयोगाभावस्तस्यप्रतियोग्यधिकरणद्रव्यवृत्तित्वादितिवाच्यम्॥हेत्वधिकरणेप्रतियोग्यनधिकरण
वृत्तित्वविशिष्टस्यविवक्षितत्वात्॥स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावइतिनिष्कर्षः॥प्रतियोग्यनधिकरण
त्वंचप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वंबोध्यम्॥तेनविशिष्टसत्तावान्जातेरित्यादौजात्यधिकरणगुणादेर्विशिष्टसत्ताभावप्र

तियोगिसन्नाधिकरणत्वेपिन क्षतिः ॥ अत्र साध्यतावच्छेदकसंबन्धेनप्रतियोग्यनधिकरणत्वंवाच्यम् ॥ तेनज्ञानवान्सत्त्वादित्यादौसत्त्वाधिक
रणघटादेर्विषयतासम्बन्धेनज्ञानाधिकरणत्वेपिनक्षतिः ॥ इत्थञ्चवह्निमान्धूमादित्यादौधूमाधिकरणेसमवायेनवह्निविरहसत्त्वेपिनक्षति
॥ नत्रप्रतियोगितावच्छेदकावच्छिन्नस्ययस्यकस्यचित्प्रतियोगिनोनधिकरणत्वं तत्सामान्यस्यवा ॥ यत्किञ्चित्प्रतियोगितावच्छेदकावच्छि
न्नानधिकरणत्वंवाविवक्षितम् ॥ आद्येकपिसंयोगीएतद्वृक्षत्वादित्यादौ तथैव व्याप्तिः ॥ कपिसंयोगाभावस्यहिप्रतियोगितावच्छेदकावच्छि
न्नोवृक्षावृत्तिरपिकपिसंयोगोभवतितदनधिकरणंवृक्षइति ॥ द्वितीयेतुप्रतियोगिव्यधिकरणाभावाप्रसिद्धिः ॥ सर्वस्यैवाभावस्यपूर्वक्षणवृत्तित्व
विशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात् नचवन्हिमान्धूमादित्यादौघटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियो
ग्यधिकरणत्वंयद्यपिपर्वतादेस्तथापिसाध्यतावच्छेदकसंबन्धेनतत्प्रतियोग्यनधिकरणत्वमस्त्येवेतिकथंप्रतियोगिव्यधिकरणाभाव
प्रसिद्धिरितिवाच्यम् ॥ घटाभावेयोवन्ह्यभावस्तस्यघटाभावात्मकतयाघटाभावस्यवह्निरपिप्रतियोगितदधिकरणंपर्वतादीतिक्रमेणप्र
तियोगिव्यधिकरणस्याप्रसिद्धत्वात् ॥ यदितुघटाभावात्वन्ह्यभावादिर्भिन्नइत्युच्यते । तथापिधूमाभाववान्वन्ह्यभावादित्यादावव्याप्तिः
॥ तत्र साध्यतावच्छेदकसंबंधः स्वरूपसंबन्धस्तेनसंबंधेनसर्वस्यैवाभावस्यपूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिक
रणत्वंहेत्वधिकरण स्येति ॥ तृतीयेतुकपिसंयोगाभाववानात्मत्वादित्यादावव्याप्तिः ॥ तत्रात्मवृत्तिकपिसंयोगाभावाभावःकपिसं
योगस्तस्यप्रतियोगितावच्छेदकंगुणसामान्याभावत्वमपितदवच्छिन्नानधिकरणत्वंचहेत्वधिकरणस्यात्मनइतिमेवम् ॥ यादृशप्रति
योगितावच्छेदकावच्छिन्नानधिकरणत्वंहेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्यविवक्षिततत्त्वात् ॥ नतु कालोघटवान्काल
परिमाणादित्यत्रप्रतियोगिव्यधिकरणाभावाप्रसिद्धिः ॥ हेत्वधिकरणस्यमहाकालस्यजगदाधारतयासर्वेषामेवाभावानां

सि॰मु॰ २२

साध्यतावच्छेदकसम्बन्धेनकालिकविशेषणतयाप्रतियोग्यधिकरणवृत्तित्वात् ॥ अत्रकेचित् ॥ महाकालान्यत्वविशिष्टघ
टाभावस्तत्रप्रतियोगिव्यधिकरणः ॥ महाकालस्यघटाधारत्वेपिमहाकालान्यत्वविशिष्टघटानाधारत्वात् ॥ महाकालेमहाका
लभेदाभावात् ॥ वस्तुतस्तुप्रतियोगितावच्छेदकसम्बन्धेनप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासा
मान्येयत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेनसंबन्धेनतद्धर्मावच्छिन्नस्यतद्धेतुव्यापकत्वंबोध्यम् ॥ व्यापक
सामानाधिकरण्यंचव्याप्तिः ॥ यत्सम्बन्धःसाध्यतावच्छेदकसंबन्धःयद्धर्मःसाध्यतावच्छेदकधर्मः । तत्रयदियद्धर्मावच्छिन्नत्वा
भावमात्रमित्युच्यते ॥ तदासमवायेनयोवह्न्यभावस्तत्स्यप्रतियोगितावच्छेदकसम्बन्धःसमवायस्तेनप्रतियोग्यनधिकरणपर्व
तादिवृत्तिः सएवतत्प्रतियोगितावच्छेदकंच वन्हित्वमित्यव्याप्तिःस्यात् ॥ यदिचयत्संबन्धावच्छिन्नत्वाभावमात्रमुच्यते ॥
तदातादृशस्यसंयोगेनघटाभावस्यप्रतियोगितायांसंयोगसम्बन्धावच्छिन्नत्वसत्त्वादव्याप्तिःस्यादतउभयमुपात्तम् ॥ इत्थञ्च
कालोघटवान् कालपरिमाणादित्यादौसंयोगसम्बन्धेनघटाभावप्रतियोगिनोघटस्यानधिकरणेहेत्वधिकरणेमहाकालेवर्त्त
मानःसएवसंयोगेनघटाभावस्तस्यप्रतियोगितायांकालिकसम्बन्धावच्छिन्नत्वघटत्वधर्मावच्छिन्नत्वोभयाभावसत्त्वान्ना
व्याप्तिः ॥ धूमवान्वन्हेरित्यादावतिव्याप्तिवारणायसामान्यपदमुपात्तम् ॥ ननुप्रमेयवह्निमान्धूमादित्यादौप्रमेयवन्हित्वाव
च्छिन्नत्वमप्रसिद्धम् गुरुधर्मस्यानवच्छेदकत्वादितिचेन्न ॥ कम्बुग्रीवादिमान्नास्तीतिप्रतीत्याकम्बुग्रीवादिमत्त्वावच्छि राम॰
न्नप्रतियोगिताविषयीकरणेनगुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादितिसंक्षेपः ॥ ७० ॥ ॥ ॥ २२

पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह॥ सिषाधयिषयेति॥ सिषाधयिषाविरहविशिष्टायाः सिद्धेरभावः पक्षता॥ तद्वान्पक्ष इत्यर्थः सिषाधयिषामात्रं न पक्षता॥ विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात्॥ अत एव साध्यसन्देहोपि न पक्षता॥ विनापि सन्देहेन घनगर्जितेन मेघानुमानात्॥ सिद्धौ सत्यामपि सिषाधयिषासत्त्वेनुमितिर्भवत्येव॥ अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम्॥ तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता॥ यत्र सिषाधयिषा अस्ति तत्र सिद्धौ सत्यामसत्यां च पक्षता॥ यत्र च सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता॥ सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात्॥ ननु यत्र परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा तत्र सिषाधयिषाकाले परामर्शाभावान्नानुमितिः॥ यत्र सिद्धिपरामर्शसिषाधयिषाः क्रमेण भवन्ति॥ तत्र सिषाधयिषाकाले सिद्धेर्नाशात्प्रतिबन्धकाभावादेवानुमितिः॥ यत्र सिषाधयिषासिद्धिपरामर्शाः

॥ सिषाधयिषया शून्या सिद्धिर्यत्र न तिष्ठति॥ स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत्॥ ७१

सन्ति तत्र परामर्शकाले सिषाधयिषैव नास्ति॥ एवमन्यत्रापि सिद्धिकाले परामर्शकाले न सिषाधयिषा॥ योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्॥ तत्कुतः सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न॥ यत्र वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति प्रत्यक्षं स्मरणं वा ततः सिषाधयिषा तत्र पक्षतासम्पत्तये तद्विशेषणावश्यकत्वादिति॥ अत्र चेदं बोध्यम्॥ यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता॥ तेन सिद्धिपरामर्शसत्त्वे यत्किञ्चिज्ज्ञानं जायतामितीच्छायामपि नानुमितिः॥ वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छायामनुमितिर्भवत्येव॥ एवं धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनुयामितीच्छायामपि नानुमितिः॥ सिषाधयिषाविरहकाले

यादृशसिद्धिसत्त्वेनानुमितिस्तादृशी सिद्धिर्विशिष्यतत्तदनुमितिप्रतिबन्धिका वक्तव्या ॥ तेन पर्वतस्तेजस्वी पाषाणमयो वन्हिमानिति ज्ञानसत्त्वेप्यनुमितेर्न विरोधः ॥ परन्तु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितेर्दर्शनात्पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन सिद्धिरेव प्रतिबन्धिका ॥ पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि ॥ इदन्तु बोध्यम् ॥ यत्रायं पुरुषो न वेति संशयानन्तरं पुरुषत्वव्याप्यकरचरणादिमानिति ज्ञानं तत्रानुमित्सायां सत्यां पुरुषत्वस्य प्रत्यक्षं भवति नत्वनुमितिरतोनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री कामिनीजिज्ञासादिवत् स्वातंत्र्येण प्रतिबन्धिका एवं परामर्शानन्तरं विनाप्रत्यक्षेच्छां पक्षादिप्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिके

अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ॥ कालात्ययापदिष्टश्च हेत्वाभासस्तु पंचधा ॥७२॥

त्तिसंक्षेपः ॥७१॥ हेतुप्रसङ्गेन हेत्वाभासान्निरूपयति ॥ अनैकान्त इति ॥ तल्लक्षणं च यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वम् ॥ तथा हि ॥ व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते दोषाः ॥ यद्विषयकत्वं च यादृशविशिष्टविषयकत्वं बोध्यम् ॥ तेन बाधभ्रमस्यानुमितिविरोधित्वेपि न क्षतिः तत्र पर्वतो वन्ह्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषः ॥ न च यत्र वन्ह्यभावव्याप्यपाषाणमयत्ववानिति परामर्शकाले वन्हिव्याप्यधूमस्याभासत्वं न स्यात् तत्र वन्ह्यभावव्याप्यवान्पक्ष इति विशिष्टस्याप्रसिद्धत्वादिति वाच्यम् ॥ इष्टापत्तेरन्यथा बाधस्याप्यनित्यदोषत्वापत्तेः ॥ तस्मात्तत्र वन्ह्यभावव्याप्यपाषाणमयत्ववानिति परामर्शकाले वन्हिव्याप्यधूमस्य नाभासत्वम् ॥ भ्रमादनुमितिप्रतिबन्धमात्रम् ॥ हेतुस्तु न दुष्टः ॥ इत्थञ्च साध्याभाववद्वृत्तिहेत्वादिकं दोषस्तद्वत्ता च हेतोर्भे

नकेनापिसम्बन्धेनेतिनव्याः॥ परेतुयद्विषयकत्वेनज्ञानस्यानुमिति विरोधित्वंतत्त्वंहेत्वाभासत्वम्॥ सत्प्रतिपक्षादौ विरोधिव्याप्त्यादिक
मेवतथातद्रूपत्वंचहेतोर्ज्ञानरूपसम्बन्धेन॥ नचैवंवह्निमान्धूमादित्यादौपक्षेबाधभ्रमस्यसाध्याभावविषयकस्यानुमितिविरोधित्वात्
॥ज्ञानरूपसम्बन्धेनतद्रूपत्वस्यापिसत्त्वात्सद्धेतोरपिबाधितत्वापत्तिरितिवाच्यम्॥ तत्रज्ञानस्यसंबन्धत्वाकल्पनात्तत्रसत्प्रतिपक्षितइ
तिव्यवहारेणतत्कल्पनात्तत्रवाधितव्यवहाराभावादित्याहुः॥ अनुमितिविरोधित्वंच। अनुमिति तत्कारणान्यतरविरोधित्वम्॥ तेनव्यभि
चारिणिनाव्याप्तिः॥ दोषज्ञानंतुयद्धेतुविषयकंतद्धेतुकानुमितेःप्रतिबन्धकंतेनैकहेतौव्यभिचारज्ञानेहेत्वन्तरेणानुमित्युत्पत्तेस्तदभावा
द्यनवगाहित्वाच्चव्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेपिनक्षतिरितिसंक्षेपः॥ यादृशपक्षसाध्यहेतौयावन्तोदोषास्तावदन्यान्यत्वम्

आद्यःसाधारणस्तुस्यादसाधारणकोपरः॥ तथैवानुपसंहारीत्रिधानैकान्तिकोभवेत्॥ ७३॥

तत्रहेत्वाभासत्वं॥ पञ्चत्वकथनंतुतत्सम्भवस्थलाभिप्रायेण॥ एवंसाधारणाद्यन्यतमत्वंअनैकान्तिकत्वम्॥ ७२॥ आद्यइति॥ साधा
रणःसाध्यवदन्यवृत्तिः। तेनचव्याप्तिज्ञानप्रतिबन्धःक्रियते॥ असाधारणःसाध्यासमानाधिकरणः यथाशब्दःनित्यःशब्दत्वात्। तेनसा
ध्यसमानाधिकरण्यग्रहःप्रतिबध्यते॥ अन्येतुसपक्षावृत्तिरसाधारणः। सपक्षश्चनिश्चितसाध्यवान्। इत्यञ्चशब्दोऽनित्यःशब्दत्वादित्या
दौयदापक्षेसाध्यनिश्चयस्तदानासाधारण्यम्॥ तत्रहेतोर्निश्चयादित्याहुः। अनुपसंहारीचात्यन्ताभावाप्रतियोगिसाध्यकादिः। अने
नचव्यतिरेकव्याप्तिग्रहप्रतिबन्धःक्रियते॥ विरुद्धस्तुसाध्यव्यापकीभूताभावप्रतियोगी। अयंसाध्याभावग्रहसामग्रीत्वेनप्रतिबन्ध
कः। सत्प्रतिपक्षेतुप्रतिहेतुःसाध्याभावसाधकः। अत्रहेतुरेकएवेतिविशेषः॥ साध्यभावसाधकएवहेतुःसाध्यसाधकत्वेनोपन्यस्तइत्यश

ऽगृहीताप्रामाण्यक उद पंक्ती १

सि॰मु॰ २४ ति। विशेषोन्नायकत्वाच्च विशेषः। सत्प्रतिपक्षः साध्याभावव्याप्यवान्पक्षः। अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वेनोपस्थितिकालीनात्तदभाव
व्याप्यवत्त्वेनोपस्थितिविषयः स इत्यन्ये। अत्र च परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम्। अत्र केचित्। यथा घटाभावव्या
प्यवत्ताज्ञाने विद्यमानेपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते यथा च शंखे सत्यपि पीतत्वाभावव्याप्यशंखत्ववत्ताज्ञाने सति पित्तादिदो
षे पीतः शंख इति धीः। एवं कोटिद्वयव्याप्यदर्शनेपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति। तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भव
त्येव। यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलवत्तया द्वितीयकोटिभानप्रतिबन्धान्न संशयः। फलबलेन चाधिकबलसमबलभावः कल्प्य
त इत्याहुः। तन्न। तदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयात्। लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञा
नमात्रे तस्य प्रतिबन्धकतालाघवात्। न तूपनीतभानविशेषशाब्दबोधे च पृथक्प्रतिबन्धकतागौरवात्। तथा च प्रतिबन्धकसत्त्वात्कथ
मनुमितिः। न हि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संशयाकारानुमितिप्रामाणिकी। येनानुमितिभिन्नत्वेनापि विशे
षणीयम्। यत्र च कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात्संशयो नान्यथा। अगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्र
तिबन्धकत्वादिति। असिद्धिस्तु आश्रयासिद्ध्याद्यन्यतमत्वं। आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः। यत्र काञ्चनमयः पर्वतो
वन्हिमानिति साध्यते तत्र पर्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमयपर्वते परामर्शप्रतिबन्धः फलम्। स्वरूपासिद्धिस्तु पक्षे
व्याप्यत्वाभिमतस्याभावः। अत्र च ह्रदो द्रव्यधूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे व्याप्यहेतुमत्ताज्ञानरूपस्य परा
मर्शस्य प्रतिबन्धः फलम्। साध्याप्रसिद्ध्यादयश्चापि व्याप्यत्वासिद्धिमध्येऽन्तर्भूताः। साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः। ए राम॰
तज्ज्ञाने जाते च काञ्चनमयवन्हिमानित्यादौ साध्यतावच्छेदकविशिष्टसाध्यपरामर्शप्रतिबन्धः फलम्। एवं हेतौ हेतुतावच्छेद २४

काभावः साधनाप्रसिद्धिः। यथा काञ्चनमयधूमादित्यादौ। अत्र च हेतुतावच्छेदकविशिष्टहेतुज्ञानाभावात्तद्घटकव्याप्तिज्ञानादे
भावः फलम्। एवं वह्निमान्नीलधूमादित्यादौ गुरुत्वान्नीलधूमत्वस्य हेतुतानवच्छेदकत्वमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति॥ बाध
स्तु पक्षे साध्यशून्यत्वम्॥ एतस्य चानुमितिप्रतिबन्धः फलम्॥ तद्धर्मिकतदभाववन्निश्चयो लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यत
ज्ज्ञानमात्रे विरोधी। ननु संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणम्॥ तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभास
त्वमिति युक्तम्॥ पृथिव्यामितरभेद एतादृशानुमितौ पूर्वं पक्षे साध्यसंसृष्टत्वज्ञानाभावात् अप्रसिद्धसाध्यकानुमित्यपलापापत्तेः सा
ध्यसंशयादिकं विनाप्यनुमित्युत्पत्तेश्च। एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकम्। प्रमाणाभावाद्गौरवाच्च। अन्यथा सत्प्र
तिपक्षादावपि तदभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः। किन्तु भ्रमत्वज्ञानानास्कन्दिते बाधबुद्धिः प्रतिबन्ध
कता। तत्र भ्रमत्वशङ्काविघटने प्रामाण्यज्ञानं क्वचिदुपयुज्यते। न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः पक्षे हेत्वभावे स्वरूपासिद्धि
रेव दोष इति वाच्यम्॥ बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात्॥ किञ्च यत्र परामर्शानन्तरं बाधस्तत्र व्यभिचारज्ञानादेरकिञ्चित्करत्वा
त्। बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम्॥ एवं यत्रोत्पत्तिक्षणावच्छिन्नघटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव प्रतिब
न्धकत्वं वाच्यम्॥ न च पक्षे घटे गन्धसत्त्वात्कथं बाध इति वाच्यम्। पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति।
बाधतज्ज्ञाप्यभिन्ना ये ये हेत्वाभासास्तज्ज्ञाप्या अपि तन्मध्य एवान्तर्भवन्ति। अन्यथा हेत्वाभासाधिक्यप्रसङ्गात्। बाधव्याप्योः सत्प्रति
पक्षो भिन्न एव। स्वतन्त्रेच्छेन मुनिनाष्टयगपादानात्। सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इति प्रघट्टकार्थः ॥ ७२ ॥ ॥



सि·मु·
२५

॥यःसपक्षेति॥सपक्षविपक्षवृत्तिःसाधारणइत्यर्थः।सपक्षः।निश्चितसाध्यवान्।विपक्षःसाध्यवद्भिन्नः।विरुद्धवारणायसपक्षवृत्तित्वमुक्तम्
वस्तुतोविपक्षवृत्तित्वमेववाच्यम्॥विरुद्धस्यसाधारणत्वेपिदूषकताबीजस्यभिन्नतयातस्यपार्थक्यात्॥यस्तूभयस्मादित्यादि।सपक्षविपक्ष
व्यावृत्तइत्यर्थः।सपक्षःसाध्यवत्तयानिश्चितः।विपक्षःसाध्यशून्यतयानिश्चितः।शब्दोऽनित्यःशब्दत्वादित्यादौयदाशब्देऽनित्यत्वसन्देह
स्तदासपक्षत्वंघटादीनामेव।तद्व्यावृत्तंचशब्दत्वमितितदातदसाधारणम्॥यदातुशब्देऽनित्यत्वनिश्चयस्तदानासाधारणः। इदंतुप्रा
चीनमतेन।नवीनमतन्तुपूर्वमुक्तम्॥७४॥केवलान्वयिपक्षकइति।केवलान्वयिधर्मावच्छिन्नपक्षकइत्यर्थः।सर्वमभिधेयंप्रमेयत्वादि

यःसपक्षेविपक्षेचभवेत्साधारणस्तुसः॥यस्तूभयस्माद्व्यावृत्तःसत्वसाधारणोमतः॥७४॥तथैवानुपसंहारीकेवला
न्वयिपक्षकः॥यःसाध्यवतिनैवास्तिसविरुद्धउदाहृतः॥७५॥अथाश्रयासिद्ध्याद्याःस्वरूपासिद्धिरप्यथ॥व्याप्यत्वा
सिद्धिरपरास्यादसिद्धिरतस्त्रिधा॥७६॥पक्षासिद्धिर्यत्रपक्षोभवेन्मणिमयोगिरिः।ह्रदोद्रव्यंधूमवत्त्वादत्रासिद्धिरथाप
रा॥७७॥व्याप्यत्वासिद्धिरपरानीलधूमादिकेभवेत्॥ ९९

त्यादौसर्वस्यैवपक्षत्वात्सामानाधिकरण्यग्रहेस्थलान्तराभावान्नानु
मितिः।इदंतुनसम्यक्।पक्षैकदेशेसहचारग्रहेपिक्षतेरभावात्॥अस्तुवासहचारग्रहस्तावतापिज्ञानरूपासिद्धिरेवानतुहेत्वाभासत्वंतस्य॥
तथापिकेवलान्वयिसाध्यकत्वंतत्त्वमित्युक्तम्॥यःसाध्यवतीति॥एवकारेणसाध्यवत्तावच्छेदेनहेत्वभावोबोधितस्तथाचसाध्यव्यापकी
भूताभावप्रतियोगित्वंतदित्यर्थः॥७५॥असिद्धंविभजते।आश्रयासिद्धिरिति॥७६॥पक्षासिद्धिरिति।आश्रयासिद्धिरित्यर्थः॥अपरेति॥
स्वरूपासिद्धिरित्यर्थः॥७७॥नीलधूमादिकइति॥नीलधूमत्वंगुरुतयानहेतुतावच्छेदकम्॥स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराध

व्याप्यतावच्छेदकाभावात्॥

सि·मु·
२५

धूमप्रागभावत्वसंग्रहाय स्वसमानाधिकरणेति ॥ विरुद्धयोरिति ॥ कपिसंयोग कपिसंयोगाभावव्याप्यवत्तापरामर्शेपि न सत्प्रतिपक्षितत्वम
तउक्तं विरुद्धयोरिति ॥ तथाच स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः ॥७८॥ साध्यशू
न्यो यत्रेति ॥ पक्षः पक्षतावच्छेदकविशिष्ट इत्यर्थः । तेन घटे गन्धसत्त्वेपि न क्षतिः । एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम्
॥७९॥ इत्यनुमानं समाप्तम् ॥ उपमितिं व्युत्पादयति ॥ ग्रामीणस्येति ॥ यत्रारण्यकेनकेनचिद्ग्रामीणायोक्तं गोसदृशो गवयपदवाच्य इति पश्चाद्ग्रा
मीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यज्ञानं यज्जातं तदुपमितिकरणं तदनन्तरं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मर

विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥७८॥ साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ॥ उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्य
ते ॥७९॥ ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ॥ सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥८०॥ वाक्यार्थस्यातिदे
शस्य स्मृतिर्व्यापार उच्यते ॥ गवयादिपदानां तु शक्तिधीरुपमाफलम् ॥८१॥ पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ॥ शाब्दबो
धः फलं तस्य शक्तिधीः सहकारिणी ॥८२॥ ९९ णं यज्जायते तदेव व्यापारस्तदनन्तरं तत्र गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुपमि
तिः । न त्वयं गवयपदवाच्य इत्युपमितिर्गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् ॥८०॥८१॥ इत्युपमानं समाप्तम् ॥ ॐ ॥ शाब्दबोधप्रकारं दर्शयति ॥
पदज्ञानमिति ॥ न तु ज्ञायमानं पदं करणम् पदाभावेपि मौनिश्लोकादौ शाब्दबोधात् ॥ पदार्थधीरिति ॥ पदजन्यपदार्थस्मरणं व्यापारः अ
न्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः ॥ अत्रापि वृत्त्या पदजन्यत्वं बोध्यम् ॥ अन्यथा घटादिपदात्समवाय
सम्बन्धेनाकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः । वृत्तिश्च शक्तिलक्षणान्यतरसम्बन्धः । अतएव शक्तिज्ञानस्योपयोगः । एवं शक्तिग्रहाभावे





पदज्ञानेपितत्सम्बन्धेनस्मरणानुपपत्तेः।पदज्ञानस्यहिएकसंबन्धिज्ञानविधयापार्थस्मारकत्वम्॥शक्तिश्चपदेनसहपदार्थस्यसम्बन्धः।साचा
स्माच्छब्दादयमर्थोबोद्धव्यइतीश्वरेच्छारूपा।आधुनिकेनाम्निशक्तिरस्त्येवेकादशेहनिपितानामकुर्यादितीश्वरेच्छायाःसत्वात्।आधुनिक
संकेतेतुनशक्तिरितिसंप्रदायः।नव्यास्तु।ईश्वरेच्छानशक्तिःकिंत्विच्छैव।तेनाधुनिकसंकेतेपिशक्तिरस्तीत्याहुः।शक्तिग्रहस्तुव्याकरणा
दितः।तथाहि।शक्तिग्रहंव्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च।वाक्यस्यशेषाद्विवृतेर्वदन्तिसान्निध्यतःसिद्धपदस्यवृद्धाः॥धा
तुप्रकृतिप्रत्ययादीनांशक्तिग्रहोव्याकरणाद्भवति॥क्वचित्तुसतिबाधकेत्यज्यतेपि॥यथावैयाकरणैराख्याततस्यकर्त्तरिशक्तिरुच्यते।
चैत्रःपचतीत्यादौकर्त्रासहचैत्रस्याभेदान्वयस्तच्चगौरवात्त्यज्यतेकिन्तुकृतौशक्तिर्लाघवात्॥कृतिश्चैत्रादौप्रकारीभूयभासते।नचकर्त्तुर
नभिधानाच्चैत्रादिपदानन्तरंतृतीयास्यादितिवाच्यम्।कर्तृसंख्यानभिधानस्यतत्रतन्त्रत्वात्।संख्याभिधानयोग्यश्चकर्तृत्वाद्यनवरुद्धः
प्रथमान्तपदोपस्थाप्यः।कर्मत्वादीत्यस्यइतरविशेषणत्वतात्पर्याविषयत्वमर्थः।तेनचैत्रइवमैत्रोगच्छतीत्यादौनचैत्रेसंख्यान्वयः।य
च्चकर्मादौनविशेषणत्वेतात्पर्यंतद्वारणायप्रथमान्तेति।यद्वा।धात्वर्थातिरिक्ताविशेषणत्वंप्रथमदलार्थः।तेनचैत्रइवमैत्रोगच्छ
तीत्यादौचैत्रादेर्वारणम्।स्तोकंपचतीत्यादौस्तोकादेर्वारणायचद्वितीयदलं।तस्यद्वितीयांतोपस्थाप्यत्वाद्वारणा।एवंव्यापारेपिनश
क्तिर्गौरवात्।रथोगच्छतीत्यादौव्यापारेआश्रयत्वेवालक्षणा।जानातीत्यादौतुआश्रयत्वे।नश्यतीत्यादौतुप्रतियोगित्वेनिरूढलक्षणा॥उप
मानाद्यथाशक्तिग्रहस्तथोक्तम्।एवंकोशादपिशक्तिग्रहः।सतिबाधकेक्वचित्त्यज्यतेपि।यथानीलादिपदानांनीलरूपादौनीलादिविशि
ष्टेचशक्तिःकोशेनव्युत्पादिता।तथापिलाघवान्नीलादौशक्तिःनीलादिविशिष्टेतुलक्षणा।एवमाप्तवाक्यादपि।यथाकोकिलःपिक
पदवाच्यइत्यादिशब्दात्पिकादिशब्देशक्तिग्रहः।एवंव्यवहारादपि।यथाप्रयोजकवृद्धेनघटमानयेत्युक्तंतच्छ्रुत्वाप्रयोज्यवृद्धेन

नघटआनीतस्तदवधार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं घटमानयेति शब्दप्रयोज्यमित्यवधारयति। ततश्च घटं नय गामानयेत्यादिवाक्या
दौ आवापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति॥ इत्यन्वयभूतले नीलो घट इत्यादिशब्दान्न शाब्दबोधः। घटादिप
दानां कार्यान्वितघटादिबोधे सामर्थ्यावधारणात्। कार्यताबोधं प्रति च लिङा दीनां सामर्थ्यात्तदभावान्न शाब्दबोध इति केचित्। तन्न॥
प्रथमतः कार्यान्वितघटादौ शक्त्य वधारणेपि लाघवेन पश्चात्तस्य परित्यागौचित्यात्॥ अत एव चैत्रपुत्रस्ते जातः कन्या ते गर्भिणीत्यादौ
मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुकतया तं शब्दमवधारयति। तयाच
व्यभिचारान्न कार्यान्विते शक्तिः। न च तत्र तं पश्येत्यादिकं शब्दान्तरमध्याहार्यम्॥ मानाभावात्। चैत्रपुत्रस्ते जातो मृत इत्यादौ तदभावाच्च।
इत्यन्वयलाघवादन्विते घटेपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति। एवं वाक्यशेषादपि शक्तिग्रहः। यथा यवमयश्चरुर्भवतीत्य
त्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः। कंगौ च म्लेच्छानाम्॥ तत्र हि यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति। व
सन्ते सर्वसस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिन इति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते। कंगौ तु श
क्तिभ्रमात्प्रयोगः। नानाशक्तिकल्पने गौरवात्। हरिपदादौ तु विनिगमकाभावान्नानाशक्तिकल्पना। एवं विवरणादपि शक्तिग्रहः। वि
वरणं तु तत्समानार्थकपदान्तरेण तदर्थकथनम्। यथा घटोस्तीत्यत्र कलशोस्तीत्यनेन विवरणाद्घटपदस्य कलशे शक्तिग्रहः॥
एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते। एवं प्रसिद्धपदस्य सान्निध्यादपि शक्तिग्रहः। यथेह सह
कारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य कोकिले शक्तिग्रह इति॥ तत्र जातावेव शक्तिर्न तु व्यक्तौ। व्यभिचारादानन्त्याच्च। शक्तिं विना च
जातिभानस्यासम्भवाद्व्यक्तेरपि भानमिति केचित्। तन्न। शक्तिं विना व्यक्तेर्भानानुपपत्तेः। न च व्यक्तौ लक्षणा। अनुपपत्तिप्रतिसन्धानं विना पि-

शक्तिबोधात्।नचव्यक्तिशक्तावानन्त्यम्।सकलव्यक्तावेकस्याएवशक्तेःस्वीकारात्।नचाननुगमःगोत्वादेरेवानुगमकत्वात्।किञ्चगोःश
क्येतिशक्तिग्रहोयदितदाव्यक्तौशक्तिः।यदितुगोत्वंशक्यमितिशक्तिग्रहस्तदागोत्वप्रकारकपदार्थस्मरणंशाब्दबोधश्चनस्यात्॥समानप्रका
रकत्वेनशक्तिज्ञानस्यपदार्थस्मरणंशाब्दबोधंप्रतिचहेतुत्वात्।किञ्चगोत्वेयदिशक्तिस्तदागोत्वत्वंशक्यतावच्छेदकंवाच्यम्।गोत्वत्वन्तु
गवेतरासमवेतत्वेसतिसकलगोसमवेतत्वम्।तथाचगोव्यक्तीनांशक्यतावच्छेदकेऽनुप्रवेशात्तवैवगौरवम्॥तस्मात्तत्तज्जात्याकृति
विशिष्टतत्तद्व्यक्तिबोधानुपपत्त्याकल्प्यमानाशक्तिर्जात्याकृतिविशिष्टव्यक्तौविश्राम्यतीति।शक्तंपदंतच्चचतुर्विधं॥क्वचिद्यौगिकंक्वचिद्रूढं
क्वचिद्योगरूढम्।क्वचिद्यौगिकरूढम्।यत्रावयवार्थएवावबुध्यतेतद्यौगिकम्।यथापाचकादिपदम्।यत्रावयवशक्तिनैरपेक्ष्येणसमुदाय
शक्तिमात्रेणबुध्यतेतद्रूढम्॥यथागोपदंमण्डपादिपदम्।यत्रत्ववयवशक्तिविषयेसमुदायशक्तिरप्यस्तितद्योगरूढम्॥यथापंकजा
जादिपदम्॥तथाहि॥पङ्कजपदमवयवशक्त्यापङ्कजनिकर्तृस्वरूपमर्थंबोधयति॥समुदायशक्त्याचपद्मत्वेनरूपेणपद्मंबोधय
ति॥नचकेवलावयवशक्त्याकुमुदेप्रयोगःस्यादितिवाच्यम्॥रूढिज्ञानस्यकेवलयौगिकार्थप्रतिबन्धकत्वादितिप्राञ्चः॥वस्तुत
स्तुसमुदायशक्त्युपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुरन्वयोभवतिसान्निध्यात्।यत्ररूढ्यर्थस्यबाधःप्रतीयतेतत्रलक्षणयाकुमु
दादेर्बोधः।यत्रतुकुमुदत्वेनरूपेणबोधेनतात्पर्यज्ञानंपद्मत्वस्यचबाधस्तत्रावयवशक्तिमात्रेणनिर्वाहइत्याहुः॥यत्रतुस्थलपद्मा
दाववयवार्थबाधस्तत्रसमुदायशक्त्यापद्मत्वेनरूपेणबोधः।यदितुस्थलपद्मंविजातीयमेवतदालक्षणैव।यत्रतुयौगिकार्थरूढ्य राम॰
र्थयोःस्वातन्त्र्येणबोधस्तद्यौगिकरूढम्।यथोद्भिदादिपदम्॥तत्रहिऊर्ध्वभेदनकर्तातरुगुल्मादिरपिबुध्यते॥यागविशेषोपीति॥प्र

॥लक्षणा शक्यसम्बन्धेत्यादि॥ गङ्गायां घोष इत्यादौ गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसन्धीयते। तत्र लक्षणया तीरस्य बोधः। सा च शक्यसम्बन्धः॥ तथाहि॥ प्रवाहरूपशक्यार्थसम्बन्धस्य तीरे गृहीतत्वात्तीरस्य स्मरणं ततः शाब्दबोधः॥ परन्तु यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा यष्टीः प्रवेशयेत्यत्र लक्षणा न स्यात्। यष्टिषु प्रवेशान्वयस्यानुपपत्तेरभावात्। तेन तत्प्रवेशे भोजनतात्पर्यानुपपत्त्या यष्टिधरे लक्षणा॥ एवं काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदस्य दध्युपघातके लक्षणा॥ सर्वतो दधिरक्षायास्तात्पर्यविषयत्वात्॥ एवं छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वे लक्षणा॥ इयमेवाजहत्स्वार्था लक्षणेत्युच्यते॥ एकसार्थवाहित्वेन रूपेण छत्रितदभावयोर्बोधात्॥ यदि चान्वयानुपपत्तिर्लक्षणाबीजं स्यात्तदा क्वचिद्गङ्गापदस्य तीरे क्वचिद्घोषपदस्य मत्स्यादौ लक्षणेति

## लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः ॥

नियमो न स्यात्॥ इदन्तु बोध्यम्॥ शक्यार्थसम्बन्धो यदि तीरत्वेन रूपेण गृहीतस्तदा तीरत्वेन तीरबोधः। यदि तु गङ्गातीरत्वेन रूपेण गृहीतस्तदा तेनैव रूपेण स्मरणम् शाब्दबोधश्च। अत एव लक्ष्यतावच्छेदके न लक्षणा॥ तत्प्रकारकबोधस्य तत्र लक्षणां विनाप्युपपत्तेः परन्त्वेवं क्रमेण शक्यतावच्छेदकेपि शक्तिर्न स्यात्॥ तत्प्रकारकशक्यार्थस्मरणं प्रति तत्तत्पदस्य सामर्थ्यमित्यस्य सुवचत्वादिति विभावनीयम्॥ यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते। यथा द्विरेफादिपदे रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्य सम्बन्धो भ्रमरे ज्ञायते तत्र लक्षितलक्षणा॥ किन्तु लाक्षणिकं पदं नानुभाविकम्। लाक्षणिकार्थस्य शाब्दबोधे तु पदान्तरं कारणम्॥ शक्तिलक्षणान्यतरसंबन्धेनेतरपदार्थान्वितस्य स्वशक्यार्थशाब्दबोधं प्रति पदानां सामर्थ्यावधारणात्॥ वाक्ये तु शक्तेरभावाच्छक्यसम्बन्ध



सि·मु· रूपालक्षणापिनास्ति॥ यत्रगभीरायांनद्यांघोषइत्युक्तंतत्रनदीपदस्यनदीतीरेलक्षणा। गंभीरपदार्थस्यनद्यासहान्वयःक्वचिदेकदे
२८ शान्वयस्यापिस्वीकारात्॥ यदितुतत्रैकदेशान्वयोनस्वीक्रियतेतदानदीपदस्यगंभीरनदीतीरेलक्षणा। गंभीरपदंतात्पर्यग्राहकम्। ब
हुव्रीहावप्येवम्॥ तत्रहिचित्रगुपदादौयद्येकदेशान्वयःस्वीक्रियते। तदागोःपदस्यगोस्वामिनिलक्षणा। गविचित्राभेदान्वयः। यदित्वे
कदेशान्वयोनस्वीक्रियतेतदागोपदस्यचित्रगोस्वामिनिलक्षणा। चित्रपदंतात्पर्यग्राहकं। एवमारूढवानरोवृक्षइत्यत्रवानरपदेवानरा
रोहणकर्मणिलक्षणा। आरूढपदंचतात्पर्यग्राहकम्॥ एवमन्यत्रापि॥ तत्पुरुषेतुपूर्वपदेलक्षणा॥ तथाहि॥ राजपुरुषादिपदेराजप
दार्थेनपुरुषादिपदार्थस्यसाक्षान्नान्वयः। निपातातिरिक्तनामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात्॥ अन्यथाराजापुरुषइत्यत्रापितथा
न्वयबोधःस्यात्। घटोनपटइत्यादौघटपटाभ्यांनञःसाक्षादेवान्वयान्निपातातिरिक्तेति। नीलोघटइत्यादौनामार्थयोरभेदसम्बन्धेनान्व
याद्भेदेनेति॥ नचराजपुरुषइत्यादौलुप्तविभक्तेःस्मरणात्कल्प्यमितिवाच्यम्॥ अस्मृतविभक्तेरपिततोबोधोदयात्। तस्मात्राजपदादौरा
जसम्बन्धिनिलक्षणा। तस्यपुरुषेणसहाभेदान्वयः। द्वन्द्वेतुधवखदिरौछिन्धीत्यादौधवःखदिरश्चविभक्त्यर्थद्वित्वप्रकारेणबुध्यतेत
त्रनलक्षणा। नचसाहित्येलक्षणेतिवाच्यम्। साहित्यशून्ययोरपिद्वन्द्वदर्शनात्। नचैकक्रियान्वयित्वरूपंसाहित्यमस्तीतिवाच्यम् क्रि
याभेदेपिधवखदिरौछिन्धीपश्येत्यादौतद्दर्शनात्॥ साहित्यस्याननुभवाच्च। अतएवराजपुरोहितौसायुज्यकामौयजेयातां। नेत्यत्रल
क्षणाभावात्द्वन्द्वआश्रीयते। तस्मात्साहित्यादिकंनार्थः॥ किन्तुवास्तवोभेदोयत्रतत्रद्वन्द्वः। नचनीलघटयोरभेदइत्यादौकथमिति
वाच्यम्। तत्रनीलपदस्यनीलत्वेघटपदस्यघटत्वेलक्षणा-अभेदइत्यत्रचाश्रयाऽभेदइत्यर्थात्॥ समाहारद्वन्द्वेतुयदिसमाहारोऽप्यनुभू राम·
यतइत्युच्यते॥ तदाअहिनकुलमित्यादौपरपदेऽहिनकुलसमाहारेलक्षणापूर्वपदंतात्पर्यग्राहकम्॥ नचभेरीमृदङ्गंवादयेत्यत्रकथं २८



समाहारस्यान्वयः। समाहारस्यापेक्षाबुद्धिविशेषरूपस्य वादनाअसम्भवादितिवाच्यम्॥ परम्परासम्बन्धेन तदन्वयात्। एवंपञ्चमूलीत्यादावपि। परन्तु अहिनकुलमित्यादावहिर्नकुलश्च बुध्यते प्रत्येकमेकत्वान्वयः। समाहारसंज्ञाचयत्रैकत्वंनपुंसकत्वंच प्राणितूर्येत्यादिसूत्रेणोक्तं तत्रैव अन्यत्रैकवचनमसाधित्याहुः। पितरौश्वशुरावित्यादौ पितृपदे जनकदम्पत्योः श्वशुरपदे स्त्रीजनकदम्पत्योर्लक्षणा। एवमन्यत्रापि। घटा इत्यादौ तु न लक्षणा। घटत्वेन रूपेण नानाघटोपस्थितिसम्भवात्। कर्मधारयस्थले तु नीलोत्पलमित्यादौ अभेदसम्बन्धेन नीलपदार्थ उत्पलपदार्थे प्रकारस्तत्र न लक्षणा। अत एव निषादस्थपतिं याजयेदित्यत्र न तत्पुरुषः। लक्षणापत्तेः किन्तु कर्मधारयः। लक्षणाभावात्। न च निषादस्य संकरजातीयस्य वेदानधिकाराद्याजनासम्भवादितिवाच्यम्॥ निषादस्य विद्या[illegible]स्तु एवकल्प

आसत्तिर्योग्यताकांक्षातात्पर्यज्ञानमिष्यते॥ ८२॥ कारणंसन्निधानंतुपदस्यासत्तिरुच्यते॥

नीयत्वात्। लाघवेन मुख्यार्थान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतयाऽदोषत्वादिति॥ उपकुम्भमर्धपिप्पलीत्यादौ पूर्वपदे तत्सम्बन्धिनि लक्षणा। पूर्वपदार्थप्रधानतयाचान्वयबोध इति। इत्थं च समासे न क्वापि शक्तिः पदशक्त्यैव निर्वाहादिति॥ आसत्तिरित्यादि॥ आसत्तिज्ञानं योग्यताज्ञानं आकांक्षाज्ञानं तात्पर्यज्ञानं च शाब्दबोधे कारणम्। ८२। आसत्तिपदार्थमाह। कारणमिति॥ सन्निधानं त्विति॥ अन्वयप्रतियोग्यनुयोगिपदयोरव्यवधानमासत्तिस्तज्ज्ञानं च शाब्दबोधे कारणम्। क्वचिद्व्यवहितेऽव्यवधानभ्रमाच्छाब्दबोध इति केचित्॥ यत्पदार्थेन सह यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः शाब्दबोधे कारणम्॥ तेन गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादावव्यवधानोपस्थित्यभावान्न शाब्दबोधः। नीलो घटो द्रव्यं पट इत्यत्रासत्तिभ्रमाच्छाब्दबोधः। आसत्तिभ्रमेण शाब्दभ्रमाभावेपिनक्ष



सि॰मु॰ २९ त्तेः। ननुपत्रकुत्रीकुण्डलीवासस्यौदेवदत्तइत्याद्युक्तौतत्रोत्तरपदस्मरणेनपूर्वपदस्मरणस्यनाशाद्व्यवधानेनतत्तत्पदस्मरणासम्भव
इतिचेन्न॥ प्रत्येकपदानुभवजन्यसंस्कारैश्चरमस्यतावत्पदविषयकस्मरणस्याव्यवधानेनोत्पत्तेः। नानासन्निकर्षैरेकप्रत्यक्षस्येवना
नासंस्कारैरेकस्मरणोत्पत्तेरपिसम्भवात्॥ तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात्। कथमन्यथानानावर्णैरेकपदस्मरणम्॥
परन्तुतावत्पदार्थानांस्मरणादेकदैवखलेकपोतन्यायात्तावत्पदार्थानांक्रियाकर्मभावेनान्वयरूपः शाब्दबोधोभवतीतिकेचित्॥ वृद्धायु
वानः शिशवः कपोताः खलेयथामीयुगपत्पतन्ति॥ तथैवसर्वेयुगपत्पदार्थाः परस्परेणान्वयिनोभवन्ति॥ परेतुयद्यदाकाङ्क्षितंयोग्यंसन्नि
धानंप्रपद्यते॥ तेनतेनान्वितः स्वार्थः पदैरेवावगम्यते। तथाचखण्डवाक्यार्थबोधानन्तरंतथैवपदार्थस्मृत्यामहावाक्यार्थबोधइत्याहुः।

पदार्थेतत्रतद्वत्तायोग्यतापरिकीर्तिता॥ ८४॥

एतेनतावद्वर्णाभिव्यङ्ग्यः पदार्थपदस्फोटोऽपिनिरस्तः। तत्तद्वर्णसंस्कारसहितचरमवर्णोपलम्भेनतद्व्यञ्जकेनैवोपपत्तेरिति॥ इदन्तु
बोध्यम्॥ यत्रद्वारमित्युक्तम् तत्रापिधेहीत्यादिपदस्यज्ञानादेवबोधः। नतुपिधानादिरूपार्थज्ञानात्। पदजन्यतत्तत्पदार्थोपस्थितेस्तत्त
च्छाब्दबोधेहेतुत्वात्। किञ्च। क्रियाकर्मपदानांतेनतेनैवसहसाकाङ्क्षत्वात्तेनक्रियापदंविनाकथंबोधः स्यात्॥ तथापुष्पेभ्योइत्यादौस्पृ
हयतीत्यादिपदाध्याहारंविनाचतुर्थ्यनुपपत्तेः। तस्मात्पदाध्याहारआवश्यकः। योग्यतांनिर्वक्ति॥ पदार्थेत्यादिना॥ एकपदार्थेपरप
दार्थसम्बन्धोयोग्यतेत्यर्थः। तज्ज्ञानाभावाच्चवह्निनासिंचतीत्यादौनशाब्दबोधः। नन्वेतस्यायोग्यतायाज्ञानंशाब्दबोधात्प्राक्सर्वत्रनस राम॰
म्भवतिवाक्यार्थस्यापूर्वत्वादितिचेन्न। तत्तत्पदार्थस्मरणेसतिक्वचित्संशयरूपस्यक्वचिन्निश्चयरूपस्यापियोग्यतायाज्ञानस्यसम्भ २९



वात्॥नव्यास्तुयोग्यताज्ञानंशाव्दवोधेनकारणम्।वह्निनासिंचतीत्यादौसेकेवह्निकरणकत्वाभावरूपाऽयोग्यतानिश्चयेनप्रतिवन्धान्न
शाव्दवोधः।तदभावनिश्चयस्यलौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतज्ज्ञानमात्रेप्रतिवंधकत्वाच्छाव्दवोधंप्रत्यपिप्रतिवन्धकत्वं
सिद्धम्।योग्यताज्ञानविलम्वाच्चशाव्दवोधविलम्वोसिद्धइत्याहुः॥८४॥आकांक्षांनिर्वक्तियत्पदेनेत्यादि॥येनपदेनविनायस्यपदस्या
न्वयाननुभावकत्वंतेनसहतस्याकांक्षेत्यर्थः।क्रियापदंविनाकारकपदंनान्वयवोधंजनयतीतितेनतस्याकांक्षा।वस्तुतस्तुक्रियाकार
कपदानांसन्निधानमासत्त्याचरितार्थम्।परन्तुघटकर्मताबोधंप्रतिघटपदोत्तरद्वितीयारूपाकांक्षाज्ञानंकारणंतेनघटःकर्मत्वमानय
नंकृतिरित्यादौनशाव्दवोधः।अयमेतिपुत्रोराज्ञःपुरुषोपसार्यतामित्यादौतुपुत्रेणसहराजपदस्यतात्पर्यग्रहाभावात्तेनान्वयवोधः॥

यत्पदेनविनायस्याननुभावकताभवेत्॥आकांक्षावक्तुरिच्छातुतात्पर्यंपरिकीर्तितम्।८५॥

पुरुषेणसहतात्पर्यग्रहेतुतेनसहान्वयवोधःस्यादेव॥तात्पर्यंनिर्वक्ति॥वक्तुरिच्छेति।यदितात्पर्यज्ञानंकारणंनस्यात्तदासैंधवमानये
त्यादौक्वचिदश्वस्यक्वचिल्लवणस्यवोधइतिनस्यात्।नचतात्पर्यग्राहकाणांप्रकरणादीनांशाव्दवोधकारणत्वमस्त्वितिवाच्यम्॥तेषाम
ननुगमात्।तात्पर्यज्ञानजनकत्वेनतेषामनुगमेतुतात्पर्यज्ञानमेवलाघवात्कारणमस्तु॥इत्थंचवेदस्थलेपितात्पर्यज्ञानार्थमीश्वरःक
ल्प्यते॥नचतत्राध्यापकतात्पर्यज्ञानंकारणमितिवाच्यम्॥सर्गादावध्यापकाभावात्।नचप्रलयएवनास्तिकुतःसर्गादिरितिवाच्यम्॥प्र
लयस्यागमप्रतिपाद्यत्वात्।इत्थंचशुकवाक्येपीश्वरीयतात्पर्यज्ञानंकारणम्।विसंवादिशुकवाक्येतुशिक्षयितुरेवतात्पर्यज्ञानंकारणम्॥
अन्येतुनानार्थादौक्वचिदेवतात्पर्यज्ञानंकारणम्॥तथाचशुकवाक्येविनैवतात्पर्यज्ञानंशाव्दवोधः।वेदेत्वनादिमीमांसापरिशोधितत



सि॰मु॰ ३० कैरर्थावधारणमित्याहुः॥ इति शब्दखण्डः समाप्तः॥ ॥ पूर्वमनुभवस्मरणभेदाद्बुद्धेर्द्वैविध्यमुक्तम्। तत्रानुभवप्रकारा दर्शिताः। स्मृग
पतया स्मरणं न दर्शितम्। तत्र हि पूर्वानुभवः कारणम्। अत्र केचित्। अनुभवत्वेन न कारणत्वं किन्तु ज्ञानत्वेन। अन्यथा स्मरणोत्तरं स्मरणं
न स्यात्। समानप्रकारकस्मरणेन पूर्वसंस्कारस्य विनष्टत्वात्। मन्मते तु तेनैव स्मरणेन संस्कारान्तरद्वारा स्मरणोत्तरं जन्यत इत्याहुः। तन्न।
यत्र समूहालम्बनेनोत्तरं घटपटादीनां क्रमेण स्मरणमजनिष्ट सकलविषयकस्मरणं तु माभूत् तत्र फलस्य संस्कारनाशकत्वाभावात् कालस्य रो
गस्य चरमफलस्य वा संस्कारनाशकत्वं वाच्यम्। तथा च न क्रमिकस्मरणानुपपत्तिः। न च पुनः पुनः स्मरणाद्दृढतरसंस्कारानुपपत्तिः। इष्टि
त्युद्बोधकसमवधानस्य दार्ढ्यपदार्थत्वात्। न च विनिगमनाविरहादेव ज्ञानत्वेनापि जनकत्वं स्यादिति वाच्यम्। विशेषधर्मेण व्यभिचा

साक्षात्कारे सुखादीनां कारणं मन उच्यते॥ अयौगपद्याज्ज्ञानानां तस्याणुत्वमपीष्यते॥ ८६॥

रज्ञाने सामान्यधर्मेणान्यथासिद्धत्वात्। कथमन्यथा दण्डस्य भ्रमिद्वारा द्रव्यत्वेन रूपेण न कारणत्वम्। न चान्तरालिकस्मरणानां संस्का
रनाशकत्वसंशयाद्व्यभिचारसंशय इति वाच्यम्॥ अनन्तसंस्कारतन्नाशकल्पनापत्त्या चरमस्मरणस्यैव संस्कारनाशकत्वकल्पनेन व्यभिचारसं
शयाभावात्॥ ८५॥ इति स्मृतिप्रक्रिया॥ ॥ इदानीं क्रमप्राप्तं मनो निरूपयति॥ साक्षात्कारेति॥ एतेन मनसि प्रमाणं दर्शितम्॥ तथा हि। सुख
साक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वात् चाक्षुषसाक्षात्कारादिवदित्यनुमानेन मनसः करणत्वं सिद्धम् न चैवं दुःखादिसाक्षात्काराणा
मपि करणान्तराणि स्युरिति वाच्यम् लाघवादेकस्यैव सकलसाक्षात्कारकरणतयासिद्धेः। एवं सुखादीनामसमवायिकारणसंयोगाश्रयत राम॰
या मनसः सिद्धिर्बोद्धव्या। मनसोऽणुत्वे प्रमाणमाह। अयौगपद्यादिति ज्ञानानां चाक्षुषरासनादीनां यौगपद्यं एककालोत्पत्तिर्नास्तीत्यनुभ ३०

वक्तिइदम्॥ तन्ननानेन्द्रियाणांसत्यपिविषयसन्निधानेयत्सम्बन्धादेकेन्द्रियेणज्ञानमुत्पाद्यतेतदसम्बन्धाच्चत्वगादिभिःपरैर्ज्ञानंनोत्पाद्यत
तन्मनः॥ तन्मनसोविभुत्वेचासन्निधानंनसम्भवतीतिनविभुमनः नचतदानीमदृष्टविशेषोद्बोधकविलम्बादेवतज्ज्ञानविलम्बइतिवाच्यम्
तथासतिचक्षुरादीनामपिअकल्पनापत्तेः नचदीर्घशष्कुलीभक्षणादौनानावधानभाजां कथमेकदानानेन्द्रियजन्यज्ञानानीतिवाच्यम्
मनसोऽतिलाघवाच्झटितिनानेन्द्रियसंबन्धान्नानाज्ञानोत्पत्तावुत्पलशतपत्रभेदादाविवयौगपद्यप्रत्ययस्यभ्रान्तत्वात्। नचमनसः संको
चविकाशशालित्वादुभयोत्पत्तिरस्त्वितिवाच्यम् नानावयवतन्नाशादिकल्पनेगौरवाल्लाघवान्निरवयवस्यैवाणुरूपस्यमनसःकल्पनादितिभा
वः॥ ८६॥ इतिद्रव्यपदार्थव्याख्यासमाप्ता॥ ❀ ॥ द्रव्यंनिरूप्यगुणान्निरूपयति॥ अथेति॥ गुणत्वजातौकिंमानमितिचेत्। इदम्॥ द्रव्य

अथद्रव्याश्रिताज्ञेयानिर्गुणानिष्क्रियागुणाः॥ रूपंरसःस्पर्शगन्धौपरत्वमपरत्वकम्॥ ८७॥ द्रवोगुरुत्वंस्नेहश्चवेगोमू
र्तगुणाअमी॥ धर्माधर्मौभावनाचशब्दोबुद्ध्यादयोपिच॥ ८८॥ ९९ कर्मभिन्नसामान्यवतियायाकारणतासाकिञ्चिद्धर्मावच्छे

द्या। निरवच्छेद्यकारणतायाअसम्भवात्। नहिरूपत्वादिकंसत्तावातत्रावच्छेदिकान्यूनाधिकदेशवृत्तित्वादतश्चतुर्विंशत्यनुगतंकिञ्चिद्वाच्य
न्तदेवगुणत्वमिति॥ द्रव्याश्रिताइति॥ यद्यपिद्रव्याश्रितत्वंनलक्षणंकर्मादावतिव्याप्तेः। तथापिद्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिम
त्त्वन्तदर्थः भवतिहिगुणत्वन्द्रव्यत्वव्यापकतावच्छेदकन्तद्वत्ताचगुणानामिति॥ द्रव्यत्वङ्कर्मत्वंवान द्रव्यत्वव्यापकतावच्छेदकङ्गगनादौ
द्रव्यकर्मणोरभावात्। द्रव्यत्वत्वंसामान्यत्वादिकंवानजातिरितितद्व्युदासः॥ निर्गुणाइति॥ यद्यपिनिर्गुणत्वङ्कर्मादावपि तथापिसामान्यवत्त्वे
सतिकर्मान्यत्वेचसतिनिर्गुणत्वम्बोध्यम्। जात्यादीनांनसामान्यवत्त्वङ्कर्मणोनकर्मान्यत्वन्द्रव्यस्यननिर्गुणत्वमितितत्रनातिव्याप्तिः॥

सि॰मु॰ ३१

निष्क्रिया इति । स्वरूपकथनं न तु लक्षणम् । गगनादावतिव्याप्तेः ॥ रूपमिति । वेगेन स्थितिस्थापकोप्युपलक्षणीयः । ८७ । मूर्त्तगुणा इति ॥ अ
मूर्त्तेषु न वर्त्तन्त इत्यर्थः । ८८ । अमूर्त्तगुणा इति ॥ मूर्त्तेषु न वर्त्तन्त इत्यर्थः ॥ उभयेषामिति ॥ मूर्त्तामूर्त्तगुणा इत्यर्थः । ८९ । संयोगविभाग द्वित्वादी
नि द्विवृत्तीनि त्रित्वचतुष्ट्वादिकन्त्रिचतुरादिवृत्तीति बोध्यम् ९० अतः शेषगुणा इति ॥ रूपरसगन्धस्पर्शैकत्त्वपरिमाणैकपृथक्त्वपरत्वापरत्व
बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टशब्दा इत्यर्थः ॥ बुद्ध्यादीति ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना इत्यर्थः । स्पर्शान्ता

एतेऽमूर्त्तगुणाः सर्वैर्विद्वद्भिः परिकीर्तिताः ॥ सङ्ख्यादयो विभागान्ता उभयेषाङ्गुणो मताः ॥ ८९ ॥ संयोगश्च विभागश्च संख्या द्वि
त्वादिका तथा ॥ द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ९० ॥ अतः शेषगुणाः सर्वे मता एकैकवृत्तयः ॥ बुद्ध्यादिषट्कं स्पर्शा
न्ताः स्नेहः सांसिद्धिको द्रवः ॥ ९१ ॥ अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः ॥ संख्यादिरपरत्वान्तो द्रवोनैमित्तिकस्तथा ॥ ९२ ॥
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः ॥ सङ्ख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९३ ॥ एते तु द्वीन्द्रियग्राह्या अथ स्पर्शा
न्ताः शब्दकाः [illegible] एकैकेन्द्रियग्राह्या गुरुत्वादृष्टभावनाः ॥ ९४ ॥ अतीन्द्रिया विभूनान्तु ये स्युर्वैशेषिका गुणाः ॥ अकारणगुणो
त्पन्ना एते तु परिकीर्तिताः ॥ ९५ ॥ ९९ इति । रूपरसगन्धस्पर्शा इत्यर्थः । द्रवो द्रवत्वं ॥ ९१ ॥ वैशेषिका इति । विशेषा एव वैशेषिकाः स्वा
र्थे ठक् विशेषगुणा इत्यर्थः ॥ संख्यादिरिति ॥ संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वानीत्यर्थः ॥ ९२ ॥ ९३ ॥ द्वीन्द्रियेति ॥ चक्षुषा त्वचा
पि ग्रहणयोग्यत्वात् ॥ वाह्येति । रूपादीनाञ्चक्षुरादिग्राह्यत्वात् ॥ ९४ ॥ विभूनामिति ॥ बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाशब्दा इ
त्यर्थः ॥ अकारणेति ॥ कारणगुणेन कार्ये ये गुणा उत्पाद्यन्ते ते कारणगुणपूर्वका रूपादयो वक्ष्यन्ते ॥ बुद्ध्यादयस्तु न तादृशाः आत्मादेः कारणाभा

राम॰ ३१



॥ अपाकजा इति॥ पाकजरूपादीनां कारणगुणपूर्वकत्वाभावादपाकजा इत्युक्तम्। तथाविधमपाकजम् तथैकत्वमपि बोध्यम्॥ स्पष्टम्।
एवं संयोगश्चेति॥ कर्मजन्यत्वं यद्यपि न साधर्म्यं घटादावतिव्याप्तेः संयोगजसंयोगेऽव्याप्तेश्च। तथापि कर्मजन्यवृत्तिगुणत्वव्याप्यजातिम
त्त्वम्बोध्यम्। एवमन्यत्राप्यूह्यम्॥ ९७॥ पृथक्त्वेत्यत्र त्वप्रत्ययस्य प्रत्येकमन्वयादेकत्वम्पृथक्त्वञ्च ग्राह्यम्। पृथक्त्वपदेनैकपृथक्त्वं
विवक्षितम्॥ भवेदसमवायित्वमिति॥ घटादिरूपरसगन्धस्पर्शाः कपालादिरूपरसगन्धस्पर्शेभ्यो भवन्ति एवं कपालादिपरिमाणादीनां
घटादिपरिमाणाद्यसमवायिकारणत्वम्। शब्दस्यापि द्वितीयशब्दम्प्रति एवं स्थितिस्थापकैकपृथक्त्वयोरपि ज्ञेयम्॥ ९८॥ निमित्तत्वमिति

अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम्॥ स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकं॥ ९६॥ स्थितिस्थापक इत्येते स्युः कारण
गुणोद्भवाः॥ संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः॥ ९७॥ स्पर्शान्तपरिमाणैकपृथक्त्वं स्नेहशब्दके॥ भवेदसमवायित्वमथ वैशे
षिके गुणे॥ ९८॥ आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः॥ वेगेपि च द्रवत्वे च संयोगादिद्वये तथा॥ ९९॥ द्विधैव कारणत्वं
स्यादथ प्रादेशिको भवेत्॥ वैशेषिको विभुगुणः संयोगादिद्वयं तथा॥ १००॥ ॥ ० ॥ ॥ ॥

बुद्ध्यादीनामिच्छादिनिमित्तत्वादिति भावः॥ ९९॥ द्विधेति। असमवायिकारणत्वं निमित्तकारणत्वञ्च॥ तथाहि। उष्णस्पर्शः उष्णस्पर्श
स्यासमवायिकारणम् पाकजे निमित्तम्। गुरुत्वं गुरुत्वपतनयोरसमवायिकारणमभिघाते निमित्तम्। वेगो वेगस्पन्दयोरसमवायि अभि
घाते निमित्तम्। द्रवत्वन्द्रवत्वस्यन्दनयोरसमवायि संग्रहे निमित्तम्। भेरीदण्डसंयोगः शब्दे निमित्तम्भेर्याकाशसंयोगोऽसमवायी।
वंशदलद्वयविभागः शब्दे निमित्तं वंशदलाकाशविभागोऽसमवायी इति॥ प्रादेशिकः। अव्याप्यवृत्तिः॥ १०० ॥ ॥



॥ चक्षुरिति ॥ रूपत्वजातिस्तु प्रत्यक्षसिद्धा ॥ रूपशब्दोल्लेखिनी प्रतीतिर्नास्तीति चेन्मास्तु रूपशब्दप्रयोगः। तथापि नीलपीतादिष्वनुगतप्रतीतिविशेषोऽनुभवसिद्ध एव। रूपशब्दाप्रयोगे पि नीलो वर्णः पीतो वर्ण इति वर्णशब्दोल्लेखिनी प्रतीतिरस्त्येव ॥ एवं नीलत्वादिकमपि प्रत्यक्षसिद्धम्। नन्वेकैका एव नीलारुणादिव्यक्तय इत्येकव्यक्तित्वान्नीलत्वादिकं न जातिरिति वाच्यम्। नीलो नष्टो रक्त उत्पन्न इत्यादिप्रतीतेर्नीलादेरुत्पादविनाशशालितया नानात्वात् ॥ अन्यथा एकनीलनाशे जगदनीलतामापद्येत। न च नीलसमवायरक्तसमवाययोरेवोत्पादविनाशविषयकोऽसौ प्रत्यय इति वाच्यम् ॥ प्रतीत्या समवायानुल्लेखात्। न च स एवायं नील इति प्रत्यक्षबलाद्बाधकाभावाच्चैक्यमिति वाच्यम् ॥ प्रत्यक्षस्य तज्जातीयविषयत्वात्। सैवेयं गुर्जरीतिवत् ॥ लाघवन्तु प्रत्यक्षबाधितम्। अन्यथा परादीनामप्यैक्यप्रसंगात्। उत्पादविनाशबुद्धेः स

चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ॥ चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥ १०१ ॥

मवायालम्बनत्वापत्तेरिति एतेन रसादिकमपि व्याख्यातम्। चक्षुर्ग्राह्यमिति ॥ चक्षुर्ग्राह्यविशेषगुणत्वमित्यर्थः। एवमग्रेपि। द्रव्यादेरिति। उपलम्भकमुपलब्धिकारणम्। इदमेव विवृणोति। चक्षुष इति। द्रव्यगुणकर्मसामान्यानां चाक्षुषप्रत्यक्षं प्रति उद्भूतरूपं कारणम्। शुक्लादिकमनेकधेति। तच्च रूपं शुक्लनीलपीतरक्तहरितकर्बुरादिभेदादनेकप्रकारकं भवति ॥ ननु कथं कर्बुरमतिरिक्तं रूपं भवति ॥ इत्थं नीलपीताद्यवयवारब्धोऽवयवी न तावन्नीरूपोऽप्रत्यक्षप्रसंगात्। नापि व्याप्यवृत्तिनीलादिकं रूपमुत्पद्यते पीतावच्छेदेनापि नीलोपलब्धिप्रसंगात्। नाप्यव्याप्यवृत्तिनीलादिकमुत्पद्यते। व्याप्यवृत्तिजातीयगुणानामव्याप्यवृत्तित्वे विरोधात्। तस्मान्नानाजातीयरूपैरवयविनि विजातीयं चित्ररूपमारभ्यते ॥ अत एवैकं चित्ररूपमित्यनुभवोपि ॥ नानारूपकल्पने गौरवात्। इयञ्च नीलादीनां पीताद्या

तादृश रूपे प्रतिबन्धकत्वकल्पनात्॥ अवयविनि नीलपीताद्युत्पत्तिः एतेन स्पर्शोपि व्याख्यातः॥ रूपादिकमपि नाव्याप्यवृत्तिः किंतु नानाजातीयरू पवदवयवैरारब्धेऽवयविनि रूपाभाव एवेति चेत् न रसनयावयवरस एव गृह्यते रसनेन्द्रियादीनां द्रव्यग्रहे सामर्थ्याभावात्॥ अवयविनो नीर सत्वेपि क्षतेरभावात्॥ न च्यास्तु तत्राव्याप्यवृत्त्येव नानारूपम्॥ नीलादेः पीतादिप्रतिबन्धकत्वकल्पने गौरवात्॥ अत एव लोहितो यस्तु वर्णेन मुखेउच्छे च पाण्डुरः॥ श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते इत्यादिशास्त्रमप्युपपद्यते॥ न च व्याप्याव्याप्यवृत्तिजातीयद्वयोर्विरोधः॥ मानाभावात्॥ न च लाघवादेकं रूपम्॥ अनुभवविरोधात्॥ अन्यथा घटादेरपि लाघवादेकत्वं स्यात्॥ एतेन स्पर्शादिकमपि व्याख्यातमिति वदन्ति॥१०१

जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम्॥ रसस्तु रसनाग्राह्यो मधुरादिरनेकधा॥१०२॥ सहकारी रसज्ञाया नित्यतादि च पूर्ववत्॥ घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः॥१०३॥ सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः॥ स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः॥१०४॥ अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः॥ ९

॥जलादीति॥ जलपरमाणौ तेजःपरमाणौ च रूपं नित्यम्। पृथिवीपरमाणुरूपन्तु न नित्यम्। तत्र पाकेन रूपान्तरोत्पत्तेः। नहि घटस्य पाकानन्तरं तदवयवोऽपक्व उपलभ्यते। नहि रक्तकपालस्य कपालिका नीलावयवा भवंति। एवं क्रमेण परमाणावपि पाकसिद्धेः। अन्यत्। जलतेजःपरमाणुरूपभिन्नं रूपम्। सहेतुकम्। जन्यम्। रसं निरूपयति। रसस्त्विति॥ रासनज्ञाने रसः कारणमित्यर्थः॥१०२॥ पूर्ववदिति। जलपरमाणौ रसो नित्यः अन्यः सर्वोपि रसोऽनित्य इत्यर्थः। गन्धं निरूपयति। घ्राणग्राह्येति। उपकारक इति। घ्राणजन्यज्ञाने सहकारीत्यर्थः। सर्वोपि गन्धोऽनित्य एव॥१०३॥ स्पर्शं निरूपयति। स्पर्श इति। उपकारक इति॥ स्पार्शनप्रत्यक्षे स्पर्शः कारणमित्यर्थः॥१०४॥ अनुष्णाशीत इति। पृथिव्यां वायौ च स्पर्शोऽनुष्णाशीतः जले शीतः तेजस्युष्णः॥



सि॰मु॰ ३३

काठिन्येति॥ कठिनसुकुमारस्पर्शौ पृथिव्यामेवेत्यर्थः। कठिनत्वादिकन्तु नसंयोगगतो जातिविशेषः चक्षुर्ग्राह्यत्वापत्तेः। पूर्ववदिति। जलतेजो
वायुपरमाणुस्पर्शा नित्यास्तद्भिन्नास्त्वनित्या इत्यर्थः। १०५। एतेषां। रूपरसगन्धस्पर्शानाम्। नान्यत्रेति। पृथिव्यां हि रूपरसगन्धस्पर्शपरावृत्तिर
ग्निसंयोगादुपलभ्यते। नहि शतधाध्मायमानेऽपि जले रूपादिकं परिवर्त्तते। नीरे सौरभमौष्ण्यञ्चान्वयव्यतिरेकाभ्यामौपाधिकमेवेति निर्णीयते। पव
नपृथिव्योः शीतस्पर्शादिवत्। तत्रापि। पृथिवीष्वपि मध्ये परमाणावेव रूपादीनां पाक इति वैशेषिका वदन्ति। तेषामयमाशयः। अवयविनाव
ष्टब्धेष्ववयवेषु पाको न सम्भवति॥ परन्तु वन्हिसंयोगेनावयविषु विनष्टेषु स्वतन्त्रेषु परमाणुषु पाकः। पुनश्च पक्वपरमाणुसंयोगाद् द्व्यणुकादि
क्रमेण पुनर्महावयविपर्यन्तमुत्पत्तिः। तेजसामतिशयितवेगवशात् पूर्वव्यूहनाशो झटिति व्यूहान्तरोत्पत्तिश्चेति। अथ द्व्यणुकादिविनाशमा

काठिन्यादि क्षितावेव नित्यत्वादि च पूर्ववत्॥५॥ एतेषां पाकजत्वन्तु क्षितौ नान्यत्र कुत्रचित्॥ तत्रापि परमाणौ स्यात् पाको वैशेषिके नये।१०६।

रम्भकत्रिभिः क्षणैः पुनस्तस्य च रूपादिमद्भवतीति शिष्यबुद्धिवैशद्याय पक्षप्रक्रिया। तत्र विभागजविभागानङ्गीकारे नवक्षणा। तदङ्गीकारे तु विभा
गः किञ्चित्सापेक्षो विभागञ्जनयेत्॥ निरपेक्षस्य तत्त्वे कर्मत्वं स्यात्॥ संयोगविभागयोरनपेक्षं कारणं कर्मेति हि वैशेषिकसूत्रम्। स्वोत्तरोत्पन्नभा
वानपेक्षत्वन्तस्यार्थः। अन्यथा कर्मणोऽप्युत्तरसंयोगोत्पत्तौ पूर्वसंयोगनाशापेक्षणाद्व्याप्तिः स्यात्॥ तत्र यदि द्रव्यारम्भकसंयोगविनाशवि
शिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदा दशक्षणा। अथ द्रव्यनाशविशिष्टं कालमपेक्ष्य विभागजविभागः स्यात्तदैकादशक्षणा। तथाहि।
अथ नवक्षणा। वन्हिसंयोगात्परमाणौ कर्म। ततः परमाण्वन्तरेण विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशः १ ततः पर
माणौ श्यामादिनाशः।२। ततो रक्ताद्युत्पत्तिः ३ ततो द्रव्यारम्भानुगुणा क्रिया ४ ततो विभागः ५ ततः पूर्वसंयोगनाशः ६ तत आरम्भकसं

राम॰ ३३



योगः ७ ततो द्व्यणुकोत्पत्तिः ८ ततो रूपाद्युत्पत्तिः ९ इति नवक्षणा। ननु श्यामादिनाशक्षणे रक्तोत्पत्तिक्षणे वा परमाणौ द्रव्यारम्भानुगुणा
क्रियाऽस्त्विति चेन्न। अग्निसंयुक्ते परमाणौ यत्कर्म तद्विनाशमन्तरेणाणूत्पत्तिमन्तरेण च परमाणौ क्रियान्तराभावात्। कर्मवति कर्मान्त
रानुत्पत्तेः॥ निर्गुणे द्रव्ये द्रव्यारम्भानुगु[illegible]श्चात्। तथापि परमाणौ श्यामादिनिवृत्तिसमकाले रक्ताद्युत्पत्तिः स्यादिति चेन्न।
पूर्वरूपादिध्वंसस्यापि रूपान्तरे हेतुत्वात्। अथ दशक्षणा। सा चारम्भकसंयोगविनाशविशिष्टं कालमपेक्ष्य विभागेन विभागजनने सति स्या
त्॥ तथा हि वन्हिसंयोगाद्द्व्यणुकारम्भके परमाणौ कर्म। ततो विभागः। तत आरम्भकसंयोगनाशः। ततो द्व्यणुकनाशविभागजविभागौ १ ततः
श्यामनाशपूर्वसंयोगनाशौ २ ततो रक्तोत्पत्त्युत्तरसंयोगौ ३ ततो वन्हिनोदनजन्यपरमाणुकर्मणो नाशः ४ ततोऽदृष्टवदात्मसंयोगाद्द्र
व्यारम्भानुगुणा क्रिया ५ ततो विभागः ६ ततः पूर्वसंयोगनाशः ७ तत आरम्भकसंयोगः ८ ततो द्व्यणुकोत्पत्तिः ९ अथ रक्तोत्पत्तिः १० ॥
अथैकादशक्षणा॥ वन्हिसंयोगात्परमाणौ कर्म। ततो विभागः। ततो द्रव्यारम्भकसंयोगनाशः। ततो द्व्यणुकनाशः १ ततो द्व्यणुकनाशवि
शिष्टकालमपेक्ष्य विभागजविभागश्यामनाशौ २ ततः पूर्वसंयोगनाशरक्तोत्पत्ती ३ तत उत्तरदेशसंयोगः। ४। ततो वन्हिनोदनजन्यपरमा
णौ कर्मनाशः। ५। ततोऽदृष्टवदात्मसंयोगाद्द्रव्यारम्भानुगुणा क्रिया ६ ततो विभागः ७ ततः पूर्वसंयोगनाशः ८ ततो द्रव्यारम्भकोत्तरसंयोगः ९ ततो
द्व्यणुकोत्पत्तिः। १०। ततो रक्ताद्युत्पत्तिः॥ ११॥ मध्यमशब्दवदेकस्मादग्निसंयोगान्न रूपनाशोत्पादौ॥ तावत्कालमेकस्याग्नेरस्थिरत्वात्॥ किं
च्च यदि नाशक एवोत्पादकस्तदा नष्टे रूपादावग्निनाशे नीरूप एव चिरं परमाणुः स्यात्॥ उत्पादकश्चेन्नाशकस्तदा रक्तोत्पत्तौ तदग्नेर्नाशेर
क्ततरता न स्यात्॥ अथ परमाण्वन्तरे कर्मचिन्तनात्पञ्चमादिक्षणेऽपि गुणोत्पत्तिः। तथा हि एकत्र परमाणौ कर्म। ततो विभागः। तत आरम्भ
कसंयोगनाशपरमाण्वन्तरकर्मणी ततो द्व्यणुकनाशपरमाण्वन्तरकर्मजन्यविभागावेककालः १ ततः श्यामादिनाशो विभागाच्च



पूर्वसंयोगनाशश्चेत्येकः कालः २ ततोरक्तोत्पत्तिर्द्व्यारम्भकसंयोगइत्येकः कालः ३ अथद्व्यणुकोत्पत्तिः ४ ततोरक्तोत्पत्तिरिति ५ पञ्च
क्षणाद्व्यनाशसमकालंपरमाण्वन्तरेकर्मचिन्तनात् षष्ठेगुणोत्पत्तिः।तथाहि।परमाणुकर्मणापरमाण्वन्तरविभागः।ततआरम्भकसंयो
गनाशः।ततोद्व्यणुकनाशपरमाण्वन्तरकर्मणी १अथश्यामादिनाशः परमाण्वन्तरेकर्मजोविभागश्च २ ततोरक्तोत्पत्तिःपरमाण्वन्तरेपूर्वसं
योगनाशश्च३ ततःपरमाण्वन्तरसंयोगः ४ ततोद्व्यणुकोत्पत्तिः५अथरक्तोत्पत्तिः एवंश्यामनाशक्षणेपरमाण्वन्तरेकर्मचिन्तनात्सप्तक्षणा।
तथाहि।परमाणौकर्म।ततःपरमाण्वन्तरेणविभागः।ततआरम्भकसंयोगनाशः।ततोद्व्यणुकनाशः १ ततःश्यामादिनाशपरमाण्वन्तरकर्म
णी २ ततोरक्तोत्पत्तिःपरमाण्वन्तरेकर्मजविभागश्च ३ ततःपरमाण्वन्तरेणपूर्वसंयोगनाशः ४ ततःपरमाण्वन्तरेणसंयोगः ५ ततोद्व्यणु

नैयायिकानान्तुनयेद्व्यणुकादावपीष्यते॥

कोत्पत्तिः ६ ततोरक्तोत्पत्तिरिति॥७॥एवंरक्तोत्पत्तिसमकालंपरमाण्वन्तरेकर्मचिन्तनादष्टक्षणा॥तथाहि॥परमाणौकर्मततःपर
माण्वन्तरविभागः ततआरम्भकसंयोगनाशः ततोद्व्यणुकनाशः १ ततःश्यामनाशः २ ततोरक्तोत्पत्तिपरमाण्वन्तरकर्मणी ३ ततःपरमाण्व
न्तरकर्मजविभागः ४ ततःपूर्वसंयोगनाशः ५ ततःपरमाण्वन्तरसंयोगः ६ ततोद्व्यणुकोत्पत्तिः ७ अथरक्तोत्पत्ति ८ रित्यष्टक्षणा।१०६।नै
यायिकानामिति॥नैयायिकानांमतेद्व्यणुकादौअवयविन्यपिपाकोभवति।तेषामयमाशयः।अवयविनांसच्छिद्रत्वाद्वह्नेःसूक्ष्मावय
वैरन्तःप्रविष्टैरवयवेष्ववष्टब्धेष्वपि पाकोनविरुध्यते।वैशेषिकमते त्वनन्तावयवितन्नाशकल्पनेगौरवम्। इत्थञ्चसोयंघटइत्यादौ
प्रत्यभिज्ञापिसंगच्छते।यत्रतुनप्रत्यभिज्ञातत्रावयविनाशोपिस्वीक्रियतइति। संख्यांनिरूपयितुमाह॥गणनेति। गणनव्यवहारासाधा

रणं कारणं संख्येत्यर्थः ॥१०७॥ नित्येष्विति ॥ नित्येषु परमाण्वादिषु एकत्वं नित्यम् ॥ अनित्ये घटादावेकत्वमनित्यमित्यर्थः ॥ द्वित्वादयो
व्यासज्यवृत्तिसंख्या अपेक्षाबुद्धिजन्याः ॥१०८॥ अनेकेति ॥ यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावपि वर्त्तते ॥ तथापि एको द्वाविति प्र
त्ययाभावात् ॥ एको न द्वाविति प्रत्ययसद्भावाच्च ॥ द्वित्वादीनां पर्याप्तिलक्षणः कश्चित्सम्बन्धोऽनेकाश्रयोऽभ्युपेयते ॥ अपेक्षाबुद्धिनाशादि
ति प्रथममपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिः । ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पात्मकम् ॥ ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्चात
तो द्वित्वनाश इति । यद्यपि ज्ञानानां द्विक्षणमात्रस्थायित्वम् । योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिगुणनाश्यत्वात् ॥ तथाप्यपेक्षाबुद्धेस्त्रिक्षण

गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥१०७॥ नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ॥ द्वित्वादयः परार्द्धान्ता
अपेक्षाबुद्धिजा मताः ॥१०८॥ अनेकाश्रयपर्याप्ता एते तु परिकीर्त्तिताः ॥ अपेक्षाबुद्धिनाशाच्च तेषां नाशो निरूपितः १०९॥

वस्थायित्वं कल्प्यते । अन्यथा निर्विकल्पककालेऽपेक्षाबुद्धिनाशानन्तरं द्वित्वस्यैव नाशः स्यात् । न तु द्वित्वप्रत्यक्षम् । तदानीं विषयाभावात् द्वित्वगु
णस्यैव चक्षुरादिना ज्ञानजननोपगमात् ॥ तस्माद्द्वित्वप्रत्यक्षादिकमपेक्षाबुद्धेर्नाशकं कल्प्यते । न चापेक्षाबुद्धिनाशात्कथं द्वित्वनाश इति वाच्य
म् । कालान्तरे द्वित्वप्रत्यक्षाभावात् । अपेक्षाबुद्धिस्तदुत्पादिका तन्नाशात्तन्नाश इति कल्पनात् । अत एव तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिकं ३०
तेनैव गृह्यत इति कल्प्यते । न चापेक्षाबुद्धेर्द्वित्वप्रत्यक्षे कारणत्वमस्त्विति वाच्यम् । लाघवेन द्वित्वप्रत्यक्ष एव कारणत्वस्यैवोचितत्वात् । अतीन्द्रियेद्व्य
णुकादावपेक्षाबुद्धिर्योगिनाम् ॥ सर्गादिकालीनपरमाण्वादावीश्वरीयापेक्षाबुद्धिः ब्रह्माण्डान्तरवर्त्तियोगिनामपेक्षाबुद्धिर्वा द्वित्वादिकरणमिति

सि॰मु॰ अपेक्षाबुद्धिः केत्यत आह॥ अनेकेति॥ अयमेकोऽयमेक इत्याकारिकेत्यर्थः॥ इदन्तु बोध्यम्। यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्व
३५ संख्योत्पद्यते। यथा सेनावनादाविति कन्दलीकारः आचार्यास्तु त्रित्वादिकमेव बहुत्वं मन्यन्ते॥ तथा च त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नेति
रिच्यते। सेनावनादावुत्पन्नेपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात्॥ इत्थञ्चेतो बहुतरेयं सेनेति प्रतीतिरुपपद्यते। बहुत्वस्य संख्यान्तरत्वे गुणतत्तार
तम्याभावान्नोपपद्येदित्यवधेयम्। परिमाणं निरूपयति॥ परिमाणमिति॥ परिमितिव्यवहारासाधारणं कारणं परिमाणमित्यर्थः॥ ११०॥ तच्च
तुर्विधम्। अणु महद्दीर्घं ह्रस्वञ्चेति। इदं चातुर्विध्यं प्रत्यक्षसिद्धम्। तत्राणुत्वह्रस्वत्वे महत्त्वदीर्घत्वे च समनियते। तत्परिमाणम्। नित्यमित्यत्र

अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते॥ परिमाणं भवेन्मानव्यवहारस्य कारणम्॥ ११०॥ अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः॥
अनित्ये तदनित्यं स्यान्नित्ये नित्यमिहेष्यते॥ १११॥ संख्यातः परिमाणाच्च प्रचयादपि जायते॥ अनित्यं द्व्यणुकादौ तु संख्याजन्य
मुदाहृतम्॥ ११२॥ परिमाणं घटादौ तु परिमाणजमुच्यते॥ प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते॥ ११३॥ ९९ परिमाणमित्यनुषज्य

ते। १११। जायत इत्यत्रापि परिमाणमित्यनुवर्त्तते। अनित्यमिति पूर्वेणान्वितम्॥ तथा चानित्यपरिमाणं संख्याजन्यं परिमाणजन्यं प्रचयजन्यं चे
त्यर्थः। तत्र संख्याजन्यमुदाहरति। द्व्यणुकादाविति। द्व्यणुकस्य त्रसरेणोश्च परिमाणं प्रति परमाणुपरिमाणं द्व्यणुकपरिमाणं वा न कारणम्॥ परिमा
णस्य स्वसजातीयोत्कृष्टपरिमाणजनकत्वात् द्व्यणुकस्याणुपरिमाणं तु परिमाण्वणुत्वापेक्षया नोत्कृष्टम्। त्रसरेणुपरिमाणं न सजातीयम्॥ अतः पर
माणौ द्वित्वसंख्या द्व्यणुकपरिमाणस्य द्व्यणुके त्रित्वसंख्या च त्रसरेणुपरिमाणस्यासमवायिकारणमित्यर्थः। ११२ परिमाणजन्यं परिमाणमुदा रामः
हरति॥ घटादाविति॥ घटादिपरिमाणं कपालादिपरिमाणजन्यम्॥ प्रचयजन्यमुदाहरन् प्रचयं निर्वक्ति॥ प्रचय इति॥ ११३॥ ०॥ ३५

परिमाणञ्चाश्रयनाशादेव नश्यतीत्याह ॥ नाश इति । अर्थात्परिमाणस्यैव न चावयविनाशः । कथं परिमाणनाशकः । सत्यप्यवयविनि त्रि
चतुरादिपरिमाणविश्लेषेण तदुपचये वावयविनः प्रत्यभिज्ञानेऽपि परिमाणान्तरस्य प्रत्यक्षसिद्धत्वादिति वाच्यम् ॥ परमाणुविश्लेषे हि द्व्यणु
कस्य नाशोऽवश्यमभ्युपेयः । तन्नाशे च त्र्यणुकनाशः । एवं क्रमेण महावयविनो नाशस्यावश्यकत्वात् । सति च नाशकेऽनभ्युपगममात्रे
ण नाशस्यापलपितुमशक्यत्वात् ॥ शरीरादावपचयोपचयेऽसमवायिकारणनाशस्यावश्यकत्वादवयविनाश आवश्यकः । न च पटादिना
शेऽपि तन्त्वन्तरसंयोगात्परिमाणाधिक्यं न स्यादिति वाच्यम् ॥ तत्रापि वेमाद्यभिघातेनासमवायिकारणतन्तुसंयोगनाशात्पटनाशस्यावश्य
कत्वात् ॥ किं च तत्तन्त्वन्तरस्य तत्पटावयवत्वे पूर्वं तत्पट एव न स्यात् । तन्त्वन्तररूपकारणाभावात् । तन्त्वन्तरस्यावयवत्वाभावे च न तेन परि

परिमाणं मूलकादीनां नाशस्त्वाश्रयनाशतः ॥ संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥ ११४ ॥

माणाधिक्यं संयुक्तद्रव्यान्तरवत् । तस्मात्तत्र तन्त्वन्तरसंयोगे सति पूर्वपटनाशस्ततः पटान्तरोत्पत्तिरित्यवश्यं स्वीकार्यम् ।
अवयविनः प्रत्यभिज्ञानन्तु साजात्येन दीपकलिकादिवत् ॥ न च पूर्वतन्तव एव तन्त्वन्तरसहकारात्पूर्वपटे सत्येव पटान्तरमारभन्तामिति
वाच्यम् । मूर्त्तयोः समानदेशताविरोधात् ॥ तत्र पटद्वयासम्भवात् । एकदा नानाद्रव्यस्य तत्रोपलम्भस्य बाधितत्वाच्च । तस्मात्पूर्वस्य द्रव्यस्य
प्रतिबन्धकस्य विनाशे द्रव्यान्तरोत्पत्तिरित्यस्यावश्यमभ्युपेयम् । पृथक्त्वं निरूपयति ॥ संख्यावत्त्विति ॥ पृथक्प्रत्ययासाधारणं कारणं
पृथक्त्वम् । तन्नित्यतादिकं संख्यावत् । यथा हि नित्येष्वेकत्वं नित्यमनित्येष्वनित्यम् । अनित्यमेकत्वन्तु आश्रयद्वितीयक्षणे चोत्पद्यते । आ
श्रयनाशान्नश्यति । तथैकपृथक्त्वमपि । द्वित्वादिवच्च द्विपृथक्त्वादिकमपीत्यर्थः ॥ ११४ ॥ ० ॥ ०



सि॰मु॰ ३६

नन्वयमस्मात्पृथगित्यादावन्योन्याभावोभासतेतत्कथंपृथक्त्वंगुणान्तरंस्वीक्रियते।नचास्तुपृथक्त्वंनत्वन्योन्याभावइतिवाच्यम्।रू-
पंनघटइतिप्रतीत्यनापत्तेः।नहिरूपेघटावधिकंपृथक्त्वंगुणान्तरमस्ति।नवाघटेघटावधिकम्पृथक्त्वमस्ति।येनपरम्परासम्बन्धः क-
ल्प्यतइत्यतआह।अन्योन्याभाववत्तइति॥विलक्षणइति॥ननुशब्दवैलक्षण्यमेवनत्वर्थवैलक्षण्यमितिचेन्न।विनार्थभेदंघटात्पृथगितिव-
द्रूपंनपटइत्यत्रापिपञ्चमीप्रसंगात्।तस्माद्यदर्थकयोगेपञ्चमीसोर्थोनत्वर्थान्योन्याभाववत्तोभिन्नोगुणान्तरंकल्प्यतइति।११५।संयोगं

अन्योन्याभाववत्तोनास्यचरितार्थत्वमिष्यते॥अस्मात्पृथगिदंनेतिप्रतीतिर्हिविलक्षणा॥११५॥अप्राप्तयोस्तुयाप्राप्तिःसैवसंयोगईरितः
कीर्तितस्त्रिविधस्त्वेषआद्योन्यतरकर्मजः॥११६॥तथोभयस्पन्दजन्योभवेत्संयोगजोऽपरः॥आद्यस्तुश्येनशैलादिसंयोगःपरिकी-
र्तितः॥११७॥मेषयोःसन्निपातोयःसद्वितीयउदाहृतः॥कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः॥११८॥तृतीयःस्यात्कर्मजोपिद्वि-
धैवपरिकीर्तितः॥अभिघातोनोदनंचशब्दहेतुरिहादिमः॥११९॥शब्दाहेतुर्द्वितीयःस्याद्विभागोपित्रिधाभवेत्॥एककर्मोद्भवस्त्वा-
द्योद्वयकर्मोद्भवोपरः॥१२०॥विभागजस्तृतीयःस्यात्तृतीयोपिद्विधाभवेत्॥हेतुमात्रविभागोत्थोहेत्वहेतुविभागजः॥१२१॥ ॥

निरूपयति।अप्राप्तेति।तंविभजते।कीर्तितइति।एषः।संयोगः।११६।११७।सन्निपातःसंयोगः।द्वितीयः।उभयकर्मजः।११८।तृतीयइति।संयोगजसंयोगइत्य-
र्थः।तृतीयःस्यादिति।पूर्वेणान्वितः।आदिमःअभिघातः।११९।द्वितीयोनोदनाख्यःसंयोगइति।विभक्तप्रत्ययासाधारणंकारणंविभागंनिरूपयति।वि-
भागइति।एककर्मकेति।तदुदाहरणंतुश्येनशैलविभागादिकंपूर्ववद्बोध्यम्।१२०।तृतीयोपिविभागजःकारणमात्रविभागजन्यःकारणाकार-
णविभागजन्यश्चेति द्विधा।आद्यस्तावत्।यत्रैककपालेकर्मततःकपालद्वयविभागःततोघटारम्भकसंयोगनाशस्ततोघटनाशः तत । एम॰ ३६

स्तेनैवकपालविभागेनस्वकर्मणः कपालस्याकाशविभागोजन्यते। ततआकाशसंयोगनाशः। ततउत्तरदेशसंयोगः। ततःकर्मनाशइति॥ न
चतेनकर्मणैवकथंदेशान्तरविभागोनजन्यतइतिवाच्यम्॥ एकस्यकर्मणआरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसंयोग
प्रतिद्वंद्विविभागजनकत्वस्यचविरोधात्॥ अन्यथाविकसत्कमलकुड्मलभङ्गप्रसङ्गात्॥ तस्माद्यदीदमनारम्भकसंयोगप्रतिद्वन्द्विविभागं
जनयेत्॥ तदारम्भकसंयोगप्रतिद्वन्द्विविभागंनजनयेत्। नचकारणविभागेनैवद्रव्यनाशात्पूर्वंकुतोदेशान्तरविभागोनजन्यतइतिवाच्य
म्। आरम्भकसंयोगप्रतिद्वन्द्विविभागवतोऽवयवस्यसतिद्रव्येदेशान्तरविभागासम्भवात्। द्वितीयस्तावत्। यत्रहस्तक्रिययाहस्ततरुविभा
गस्ततः शरीरेपिविभक्तप्रत्ययोभवति। तत्रशरीरतरुविभागेहस्तक्रियानकारणंव्यधिकरणत्वात्। शरीरेतुक्रियानास्त्येव। अवयविकर्म

परत्वञ्चापरत्वञ्चद्विविधंपरिकीर्तितं॥ दैशिकंकालिकंचापिमूर्त्तएवतुदैशिकं॥ १२२॥ परत्वंदेशसंयोगभूयस्त्वज्ञानतो
भवेत्॥ अपरत्वंतदल्पत्वबुद्धितःस्यादितीरितम्॥ १२३॥ तयोरसमवायीतुदिक्संयोगस्तदाश्रये॥ दिवाकरपरिस्पन्द
भूयस्त्वज्ञानतोभवेत्॥ १२४॥ ९९ णोयावदवयवकर्मनियतत्वात्। अतस्तत्रकारणाकारणविभागेनकार्याकार्यविभागोजन्यतइ

तिअतःसंयोगनाशेनविभागोनान्यथासिद्धोभवति। १२१। परापरव्यव
ति। अतएवविभागोगुणान्तरम्। अन्यथाशरीरेविभक्तप्रत्ययोनस्यात्॥ अतःसंयोगनाशेनविभागोनान्यथासिद्धोभवति। १२१। परापरव्यव
हारनिमित्तेपरत्वापरत्वेनिरूपयति॥ परत्वंचेति॥ दैशिकमिति॥ दैशिकपरत्वम्बहुतरमूर्तसंयोगान्तरितत्वज्ञानादुत्पद्यते। एवंतदल्पी
यस्त्वज्ञानादपरत्वमुत्पद्यते। अत्रावधित्वार्थंपञ्चम्यपेक्षा। यथापाटलिपुत्रात्काशीमपेक्ष्यप्रयागःपरः पाटलिपुत्रात्कुरुक्षेत्रमपेक्ष्यप्रया
गोऽपरइति। १२२। १२३। तयोर्दैशिकपरत्वापरत्वयोरसमवायीअसमवायिकारणम्। तदाश्रये। दैशिकपरत्वापरत्वाश्रये॥ दिवाकरेति १२४

सि॰मु॰ अत्र परत्वापरत्वं कालिकं ग्राह्यं। यस्य सूर्यस्पंदापेक्षया यस्य सूर्यपरिस्पन्दोऽधिकः स ज्येष्ठः। यस्य न्यूनः स कनिष्ठः। कालिकपरत्वापरत्वे ज
३७ न्यद्रव्ये एव अत्र कालिकपरत्वापरत्वयोः १२५। तेषाम्। कालिकदैशिकपरत्वापरत्वानाम्। क्रमप्राप्तां बुद्धिं निरूपयति। बुद्धेरिति। १२६॥१२७
तत्रा प्रमां निरूपयति। तच्छून्येति। तदभाववति तत्प्रकारकं ज्ञानं भ्रम इत्यर्थः। तत्प्रपञ्चः। अप्रमाप्रपञ्चः। १२८। आद्य इति विपर्यास इत्यर्थः।
शरीरादौ निश्चयरूपं यदात्मत्वप्रकारकं ज्ञानं गौरोहमित्याकारकम्। स्वं शंखादौ पीतः शंख इत्याकारकं यज्ज्ञानं निश्चयरूपं तद्भ्रम इति

परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः॥ अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः॥ १२५॥ अपेक्षाबुद्धिनाशेन नाश
स्तेषां निरूपितः॥ बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः। १२६। अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते॥ अप्रमा च प्रमा
चेति द्विविधं ज्ञानमिष्यते॥ १२७॥ तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता॥ तत्प्रपंचो विपर्यासः संशयोपि प्रकीर्त्तितः॥ १२८।
आद्यो देहेष्वात्मबुद्धिः शंखादौ पीततामतिः॥ भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते॥ १२९॥ किंस्विन्नरो वा स्थाणुर्वेत्यादि
बुद्धिस्तु संशयः॥ तदभाववाप्रकाराधीस्तत्प्रकारा तु निश्चयः॥ १३०॥ स संशयो मतिर्या स्यादेकत्राभावभावयोः॥ साधारणा
दिधर्मस्य ज्ञानं संशयकारणम्॥ १३१॥ ९ ।१२९॥ किंस्विदिति वितर्के॥ निश्चयलक्षणमाह॥ तदभावेति॥ तदभावाप्रकारकं तत्प्रका

रकं ज्ञानं निश्चयः। १३०। संशयं लक्षयति॥ स संशयेति॥ एकधर्मिकविरुद्धभावाभावप्रकारकं ज्ञानं संशय इत्यर्थः। साधारणेति। उभयसाधा
रणो यो धर्मस्तज्ज्ञानं संशयकारणम्॥ यथा उच्चैस्तरत्वं स्थाणुपुरुषसाधारणं ज्ञात्वा स्थाणुर्न वा इति संदिग्धे। एवमसाधारणधर्मज्ञानं संशयकारणम् राम॰
यथा शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा शब्दो नित्यो न वेति सन्दिग्धे। विप्रतिपत्तिस्तु शब्दो नित्यो न वेत्यादिशब्दात्मिका न संशयकारणं ३७

शब्दव्याप्तिज्ञानादीनां निश्चयमात्रजनकत्वस्वाभाव्यात्। किन्तु तत्र शब्देन कोटिद्वयज्ञानं जन्यते। संशयस्तु मानस एवेति। एवं ज्ञाने प्रामा
ण्यसंशयाद्विषयसंशय इति। एवं व्याप्यसंशयादपि व्यापकसंशय इत्यादिकं बोध्यम्॥ किन्तु संशये धर्मिज्ञानं धर्मीन्द्रियसन्निकर्षो वा कार
णमिति। १३१। दोषेति। अप्रमां प्रति दोषः कारणम्। प्रमां प्रति तु गुणः कारणम्। तत्रापि पित्तादिरूपा दोषा अननुगताः। तेषां कारणत्वमन्वयव्यति
रेकाभ्यां सिद्धम्। गुणस्य प्रमाजनकत्वं त्वनुमानात् सिद्धम्। यथा प्रमा ज्ञानसामान्यकारणभिन्नकारणजन्या। जन्यज्ञानत्वात् अप्रमावत्। न च दो
षाभाव एव कारणमस्त्विति वाच्यम्, पीतः शङ्ख इति ज्ञानस्थलेपि पित्तरूपदोषसत्त्वाच्छङ्खप्रमानुत्पत्तिप्रसङ्गात्। विनिगमनाविरहादनन्त
दोषाभावस्य कारणत्वमपेक्ष्य गुणस्य कारणताया न्याय्यत्वात्। न च गुणसत्त्वेपि पित्तेन प्रतिबन्धाच्छङ्खेन श्वैत्यज्ञानम्। अतः पित्तादि

दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत्॥ पित्तदूरत्वादिरूपो दोषो नानाविधो मतः॥१३२॥ प्रत्यक्षे तु विशेष्येण विशेषणवता समं॥
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः॥१३३॥ पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत्॥ शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः॥१३४

दोषाभावानां कारणत्वमवश्यं वाच्यम्। तथा च किं गुणस्य हेतुत्वकल्पनेनेति वाच्यम्। तथाप्यन्वयव्यतिरेकाभ्यां गुणस्यापि हेतुत्वसिद्धेः। ए
वं भ्रमं प्रति गुणाभावः कारणमित्यस्यापि सुवचत्वात्। तत्र दोषाः के इत्याकाङ्क्षायामाह। पित्तेति। क्वचित्पित्तादिभ्रमे पित्तं दोषः। क्वचिच्चन्द्रा
देः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः। क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवंरूपा दोषा अननुगता एव भ्रान्तिजनका इत्यर्थः। १३२। अ
थ के गुणा इत्याकाङ्क्षायां प्रत्यक्षादौ क्रमेण गुणान्दर्शयति। प्रत्यक्षे त्विति। प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः। अनुमितौ
साध्यवति साध्यव्याप्यवैशिष्ट्यज्ञानं गुणः। एवमग्रेपि ज्ञेयम्। १३३। १३४॥ प्रमां निरूपयति। भ्रमभिन्नेति ॥ १३५ ॥ ० ॥



सि॰मु॰ ३८

ननुयत्रशुक्तिरजतयोरिमेरजतेइतिज्ञानंजातंतत्ररजतांशेपिप्रमानस्यात्।तज्ज्ञानस्यभ्रमभिन्नत्वाभावादतआह।अथवेति।तद्वद्विशेष्यक
त्वेसतितत्प्रकारकंज्ञानंप्रमेत्यर्थः।अथैवंस्मृतेरपिप्रमात्वंस्यात्॥ततःकिमितिचेत्तथासतितत्कारणस्यापिप्रमाणान्तरत्वंस्यादितिचेन्नयथार्था
नुभवकरणस्यैवप्रमाणत्वेनविवक्षितत्वात्।इदन्तुबोध्यम्।येनसम्बन्धेनयद्वत्तान्तेनसम्बन्धेनतत्प्रकारकत्वंवाच्यम्।तेनकपालादौसंयोगादि
नाघटादिज्ञानेनातिव्याप्तिः॥एवंसतिनिर्विकल्पकंप्रमानस्यात्।तस्यसप्रकारकत्वाभावादतआह।नप्रमेति।ननुवृक्षेकपिसंयोगज्ञानंभ्रमःप्र
माचस्यादितिचेन्नप्रतियोगिव्यधिकरणसंयोगाभाववतिसंयोगज्ञानस्यभ्रमत्वात्।नचवृक्षेकपिसंयोगाभावावच्छेदेनसंयोगज्ञानंभ्रमो
नस्यात्।तत्रसंयोगाभावस्यप्रतियोगिसमानाधिकरणत्वादितिवाच्यम् तत्रसंयोगाभावावच्छेदेनसंयोगज्ञानस्यभ्रमत्वात्।लक्ष्यस्यान

शाब्दबोधेयोग्यतायास्तात्पर्यस्याथवाप्रमा॥गुणःस्यात्भ्रमभिन्नंतुज्ञानमत्रोच्यतेप्रमा॥१३५॥अथवातत्प्रकारंयज्ज्ञानंतद्वद्वि
शेष्यकं॥तत्प्रमानप्रमानापिभ्रमःस्यान्निर्विकल्पकं॥१३६॥प्रकारतादिशून्यंहिसंबन्धानवगाहितत्॥प्रामात्वंनस्वतोग्राह्यंसंशया
नुपपत्तितः॥१३७

नुगमाल्लक्षणाननुगमेपिनक्षतिः १३६।मीमांसकाहिप्रमात्वंस्वतोग्राह्यमितिवदन्ति।तत्रगुरूणांमतेज्ञानस्यस्वप्रका
शकत्वात्तज्ज्ञानप्रामाण्यन्तेनैवगृह्यतइति।भट्टानांमतेज्ञानमतीन्द्रियंज्ञानजन्यज्ञातताप्रत्यक्षातयाचज्ञानमनुमीयते।मुरारिमिश्राणां
मतेऽनुव्यवसायेनज्ञानंगृह्यते।सर्वेषामपिमतेतज्ज्ञानविषयकज्ञानेनतज्ज्ञानप्रामाण्यंगृह्यते॥विषयनिरूप्यंहिज्ञानमतोज्ञानवि
त्तिवेद्योविषयः।तन्मतंदूषयति।प्रमात्वंनस्वतोग्राह्यमिति।संशयेति।यदिज्ञानस्यप्रामाण्यंस्वतोग्राह्यंस्यात्तदानभ्यासदशापन्नज्ञा
नेप्रामाण्यसंशयोनस्यात्।तर्हियदिज्ञानंज्ञातंतदात्वन्मतेप्रामाण्यंज्ञातमेवेतिकथंसंशयः।यदिनज्ञानंनज्ञातंतदाधर्मिज्ञानाभावात्

राम॰ ३८

यंसंशयस्तस्याज्ज्ञानेऽप्रामाण्यमनुमेयम्॥ तथाहि। इदंज्ञानंप्रमा सम्वादिप्रवृत्तिजनकत्वात्। यन्नैवंतन्नैवं। यथाऽप्रमा। इदंपृथिवी
त्वप्रकारकंज्ञानंप्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात्। एवमिदंजलत्वप्रकारकंज्ञानंप्रमा। स्नेहवतिजलत्वप्रकारकज्ञान
त्वात्॥ नचहेतुज्ञानंकथंज्ञातमितिवाच्यम्। पृथिवीत्वप्रकारकत्वस्य स्वतोग्राह्यत्वात्॥ तत्रगन्धग्रहेणगन्धवद्विशेष्यकत्वस्यापिस्व
ग्रहत्वात्। तत्प्रकारकत्वावच्छिन्नतद्विशेष्यकत्वं परंनगृह्यतेसंशयानुरोधात्। नतुसर्वेषांज्ञानानांयथार्थत्वात्प्रमालक्षणेतद्विशेष्यक
त्वंविशेषणंव्यर्थम्। नचरङ्गेरजतार्थिनः प्रवृत्तिर्भ्रमजन्यानस्यात्तवमतेभ्रमस्याभावादितिवाच्यम् तत्रहि दोषाधीनस्यपुरोवर्त्तिनिस्वत ना
न्त्रोपस्थितरजतभेदाग्रहस्यहेतुत्वात्॥ सत्यरजतस्थलेतुविशिष्टज्ञानस्यसत्त्वात्तदेवकारणम्। असत्त्वात्तत्रापि रजतभेदाग्रहएवकारण
मिति नचान्यथाख्यातिः सम्भवति। रजतप्रत्यक्षकारणस्यरजतसन्निकर्षस्याभावात् रङ्गेरजतबुद्धेरनुपपत्तेरितिचेन्न सत्यरजतस्थ
लेप्रवृत्तिंप्रतिविशिष्टज्ञानस्यहेतुतायाः क्लृप्तत्वात्। अन्यत्रापितत्कल्पनात्। नचसम्वादिप्रवृत्तौतत्कारणंविसम्वादिप्रवृत्तौचभेदाग्रहः
कारणमितिवाच्यम् लाघवेनप्रवृत्तिमात्रेतस्यहेतुत्वकल्पनात्। इत्थञ्च रङ्गेरजतत्वविशिष्टबुद्ध्यनुरोधेनज्ञानलक्षणाप्रत्यासत्तिकल्पने
पिनक्षतिः। फलमुखगौरवस्यादोषात्॥ किञ्चयत्ररङ्गरजतयोरिमेरजतेरङ्गेवेतिज्ञानंजातंतत्रनकारणबाधोपि। अपिचयत्ररंगरज
तयोरिमेरजतरङ्गे इतिज्ञानंतत्रोभयत्रयुगपत्प्रवृत्तिनिवृत्तीस्याताम्। रङ्गेरङ्गभेदग्रहेरजतेरजतभेदग्रहेचान्यथाख्यातिभयात्त्वन्मते
दोषादेवरङ्गेरजतभेदाग्रहस्यरजतेरङ्गभेदाग्रहस्यचसत्त्वात्। किञ्चानुमितिंप्रतिभेदाग्रहस्यहेतुत्वेजलह्रदेवह्निव्याप्यधूमवद्भेदाग्र
हादनुमितिर्निराबाधा। यदिचविशिष्टज्ञानंकारणंतदाऽयोगोलकेवह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितंसेयमुभयतःपाशार
ज्जुः। इत्थञ्चान्यथाख्यातौप्रत्यक्षमेवप्रमाणम्। रङ्गेरजतत्तयाऽवेदिषमित्यनुभवादितिसंक्षेपः ॥ १३० ॥ ० ॥



पूर्वं व्याप्तिरुक्ता तद्ग्रहोपायस्तेन दर्शित इत्यत स्तन्दर्शयति। व्यभिचारेति। व्यभिचाराग्रहः सहचारग्रहश्च व्याप्तिग्रहे कारणम्॥ व्यभिचारस्य ग्रहस्य व्याप्तिग्रहे प्रतिबंधकत्वात तदभावः कारणम्॥ एवमन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता॥ भूयोदर्शनं तु न कारणम्। व्यभिचारास्फूर्तौ सकृद्दर्शनेपि क्वचिद्व्याप्तिग्रहात्। क्वचिद्व्यभिचारशंकाविधूननद्वारा भूयोदर्शनमुपयुज्यते। यत्र तु भूयोदर्शनादपि शंका नापैति तत्र विपक्षबाधकतर्कोपेक्षितः॥ तथाहि वन्हिविरहिण्यपि धूमः स्यादिति यत्र शंका भवति तदासौ वन्हिधूमयोः कार्यकारणभावस्य प्रतिसन्धानान्निवर्त्तते। यद्ययं वन्हिमान्न स्यात्तदा धूमवान्न स्यात्कारणं विना कार्यानुपपत्तेः। यदि च क्वचित्कारणं विनापि कार्यं भविष्यति तदा ऽहेतुक एव भविष्यतीति तत्रापि शंका भवेत्॥ तदासौ व्याघातादपसारणीया। यदि हि कारणं विना कार्यं स्यात्तदा धूमार्थं वन्हेस्तृप्त्यर्थं भोजनस्य

व्यभिचारस्याग्रहोथ सहचारग्रहस्तथा॥ हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छंकानिवर्त्तकः॥१३८॥ साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा॥ स उपाधिर्भवेत्तस्य निष्कर्षोयं प्रदर्श्यते॥१३९॥

१ नियमतत्तउपादानं तत्रैव न स्यादिति। यत्र स्वत एव शंका नावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तं। तर्कः क्वचिच्छंकानिवर्त्तक इति।१३८। इदानीं परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिं निरूपयितुमाह॥ साध्येति। साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधिरित्यर्थः। ननु स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजन्यत्वं नोपाधिः स्यात्तस्य साध्यव्यापकत्वाभावात् श्यामत्वस्य घटादावपि सत्वात्॥ एवं वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वं नोपाधिः स्यात्। प्रत्यक्षत्वस्यात्मादिषु सत्वात्। तत्र च रूपाभावात्। एवं ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वं नोपाधिः स्याद्विनाशित्वस्य प्रागभावे सत्वात्। तत्र भावत्वाभावादिति चेन्न यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्यात्॥ मित्रातनयत्वावच्छिन्नश्यामत्व

स्यव्यापकं शाकपाकजत्वं तदवच्छिन्नसाधनाव्यापकं च॥ एवं पक्षधर्मवहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वस्य व्यापकमुद्भूतरूपवत्त्वम्। एवंव
हिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकञ्च। एवं ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकत्वं भावत्वं॥ सद्धेतावेताद
शोधर्मो नास्ति यद्वच्छिन्नसाध्यस्य व्यापकं तदवच्छिन्नस्य साधनस्य चाव्यापकं किंचित्स्यात्॥ व्यभिचारिणि तु उपाध्यधिकरणं यत्साध्या
धिकरणं पक्षो पाधिशून्यं साध्यव्यभिचाराधिकरणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं साधनस्य चाव्यापकत्वमुपाधेरं तत्तः स
म्भवतीति।१३९। अत एव लक्षणमप्युपाधिस्वरूपमेतदनुसारेण दर्शयति॥ सर्वे इति॥ स्वञ्च साध्यं च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः १४०
उपाधेर्दूषकताबीजमाह। व्यभिचारस्येति। उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः। तथा हि यत्र शुद्धसा

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः। हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता।१४०। व्यभिचारस्यानुमानमुपाधेस्तु
प्रयोजनं॥ शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥१४१॥ १

ध्यव्यापक उपाधिस्तत्र शुद्धेनैवोपाधिव्यभिचारेण साध्यव्य
भिचारानुमानम्। यथा धूमवान्वह्नेरित्यादौ वह्निर्धूमव्यभिचारी तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति। व्यापकव्यभिचारिणि व्याप्य
व्यभिचारावश्यकत्वात्। यत्र तु किंचिद्धर्मावच्छिन्नसाध्यस्य व्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्यव्यभिचारानुमानम्।
यथा स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचारित्वादिति। बाधानुन्नीतपक्षेत
रस्तु साध्यव्यापकताग्राहकप्रमाणाभावात्। स्वव्याघातकत्वाच्च नोपाधिः। बाधोन्नीतस्तु पक्षेतर उपाधिर्भवत्येव। यथा वह्निरनुष्णः कृतक
त्वादित्यादौ प्रत्यक्षेण वह्न्यनुष्णत्वग्रहे वह्नीतरत्वमुपाधिः। यत्र तूपाधेः साध्यव्यापकता संदिग्धा ते स सन्दिग्धोपाधिः। पक्षेतरस्तु सन्दिग्धोपाधिः



सि॰मु॰
४०

रपिनोद्भावनीयः। कथं कसंप्रदायादायातं सेयात्॥ केचित्तु सत्प्रतिपक्षोत्थापनमुपाधेः फलं तथाहि। अयोगोलकं धूमवद्वह्नेरित्यादौ अयोगो
लकं धूमाभाववत् आर्द्रेन्धनाभावादिति सत्प्रतिपक्षसम्भवात्। इत्थं च साधनव्यापकोपि कश्चिदुपाधिः। यथा करका पृथिवी कठिनसंयोग
वत्त्वादित्यादौ अत्र व्याप्याशीतस्पर्शवत्त्वमानञ्चात्र स्वरूपसरूपाहि रेव दूषणमिति वाच्यम्। सर्वत्रोपाधेर्दूषणान्तरसांकर्यात्। अत्र च सा ध्यव्या
पकः पक्षावृत्तिरुपाधिरिति वदंति। शब्दोपमानयोरितिः। वैशेषिकाणांमते प्रत्यक्षमनुमानंच प्रमाणम्॥ शब्दोपमानयोस्तुः अनुमानविधयै
व प्रामाण्यम्॥ तथाहि दण्डेनगामानयेत्यादिलौकिकपदानि वैदिकपदानिवा तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकां
क्षादिमत्पदकदम्बकत्वात्॥ घटमानयेतिपदकदम्बकवत्। यद्वा एते पदार्था मिथः संसर्गवंतः योग्यतादि मत्पदोपस्थापितत्वात् तादृशपदा

अनुमानगतार्थत्वादिति वैशेषिकं मतं॥ तन्न सम्यग्विना व्याप्तिबोधं शब्दादिबोधतः॥ १४२॥ त्रैविध्यमनुमानस्य केवलान्व
यिभेदतः॥ द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः॥ १४३॥

र्थवद्दृष्टान्तेपि दृष्टान्तान्तरेण साध्यसिद्धिरिति। एवं गवयव्यक्तिप्र
त्यक्षानन्तरं गवयपदं गवयत्वप्रवृत्तिनिमित्तकम्। असतिवृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात्। असतिवृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तत्
त्प्रवृत्तिनिमित्तकं यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम्॥ यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्र
वृत्तिनिमित्तकत्वं सिध्यति। १४१। तन्मतं दूषयति। तन्न सम्यगिति। व्याप्तिज्ञानं विनापि शब्दादितो बोधस्यानुभवसिद्धत्वात्॥ नहि सर्वत्र शब्दश्रव
णानन्तरं व्याप्तिज्ञाने प्रमाणमस्तीति। किंच सर्वत्र शब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्प्ययित्वा शा राम॰
ब्दबोध एव किन्न स्वीक्रियतामिति ध्येयम्। १४२। त्रैविध्यमिति॥ अनुमानं हि त्रिविधं केवलान्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि भे ४०

दात्। तत्रासद्विपक्षः केवलान्वयी ॥ यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम् ॥ असत्सपक्षः केवलव्यति
रेकी ॥ यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ तत्र हि जलादित्रयोदशभेदस्य सर्वमनिश्चितत्वात् निश्चितसाध्यवतः सपक्षस्याभावात् ।
सत्सपक्षविपक्षोऽन्वयव्यतिरेकी यथा वह्निमान् धूमादित्यादौ तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्त्वादिति ॥ १४३ ॥ तत्र
हि व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्वक्ति ॥ साध्याभावेति ॥ साध्याभावव्यापकीभूताभावप्रतियोगित्वमि
त्यर्थः । अत्रेदं बोध्यम् । यत्संबंधेन यदवच्छिन्नं प्रति येन संबन्धेन येन रूपेण व्यापकता गृह्यते । तत्संबन्धावच्छिन्नप्रतियोगिताकतद्धर्माव
च्छिन्नाभावज्ञानात् ॥ तत्संबंधावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति । इत्थं च यत्र विशेषणतासम्बन्धेनेतरत्वव्या

अन्वयव्याप्तिरुक्तैव व्यतिरेकिण्यथोच्यते ॥ साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४४

पकत्वं गन्धात्यन्ताभावे गृह्यते । तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिद्ध्यति । यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकत्वं गन्धाभा
वस्य गृह्यते । तत्र तादात्म्यसम्बन्धेनेतरस्याभावः सिद्ध्यति । स एवान्योन्याभावः । एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन व
ह्नेर्व्यापकता गृह्यते ॥ तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमा
भावः सिद्ध्यति । अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम् ॥ केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते ॥ ननु व्यति
रेकव्याप्तिज्ञानमपि कारणम् ॥ यत्र व्यतिरेकसहचाराद्व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते ॥ साध्यप्रसिद्धिस्तु घटादावेव जाता । पश्चात्पृथि
वीत्वावच्छेदेन साध्यत इति वदन्ति ॥ १४४ ॥



अर्थापत्तिरिति। अर्थापत्तिः प्रमाणान्तरमिति केचिन्मन्यन्ते। तथाहि। यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्वं
च प्रत्यक्षादवगतं तत्र शतवर्षजीवित्वान्यथानुपपत्त्या बहिःसत्त्वं कल्प्यत इति। तदप्यनुमानेन गतार्थत्वान्नेष्यते। तथाहि। यत्र जीवित्व
स्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते॥ एवं पीनो देव
दत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिध्यतीति। अभावप्रत्यक्षस्या
नुभाविकत्वादनुपलंभोपि न प्रमाणान्तरम्। किञ्चानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकरणत्वात् प्रत्यक्षम्। ज्ञातस्य हेतुत्वे तत्राप्यनु
पलम्भान्तरापेक्षेत्यनवस्था॥ एवं चेष्टापि न प्रमाणान्तरं। तस्याः संकेतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वाच्छब्द एवान्तर्भावा

अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते॥ व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः॥१४५॥ सुखं तु जगतामेककाम्यं ध
र्मेण जन्यते॥ अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसां॥१४६॥ निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते॥ इच्छा
तु तदुपाये स्यादिष्टोपायत्वधीर्यदि॥१४७॥

ता यत्र च व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति।१४५। सुखं निरूपयति। सुखमि
ति। काम्यमभिलाषविषयः। धर्मेणेति। धर्मत्वेन सुखत्वेन कार्यकारणभाव इत्यर्थः। दुःखं निरूपयति। अधर्मेति॥ अधर्मत्वेन दुःखत्वेन का
र्यकारणभाव इत्यर्थः। प्रतिकूलमिति। दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः।१४६। इच्छां निरूपयति। निर्दुःखत्व इति।
इच्छा द्विविधा फलविषयिणी उपायविषयिणी च। फलं तु सुखं दुःखाभावश्च। तत्र फलेच्छां प्रति फलज्ञानं कारणम्॥ अत एव स्वतः पु
रुषार्थः सम्भवति यज्ज्ञातं सत् स्ववृत्तितयेष्यते। स पुरुषार्थ इति तल्लक्षणात्। इतरेच्छानधीनेच्छाविषयत्वं फलितोऽर्थः॥ ॥ ॥

उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम्।१४७।चिकीर्षेति॥कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा चिकीर्षा॥पाकं कृत्या सा
धयामीति तदनुभवात्॥चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानं च कारणम्॥तद्धेतुरिति॥अतएव वृष्ट्यादौ कृतिसाध्यताज्ञानाभावा
न्न चिकीर्षा।१४८।बलवद्द्विष्टेति।बलवद्द्विष्टसाधनताज्ञानं तत्र प्रतिबन्धकमतो मधुविषसंपृक्तान्नभोजनेन चिकीर्षा।बलवद्द्वेषः प्रतिब
न्धक इत्यन्ये।तदहेतुत्वेति॥बलवदनिष्टाजनकत्वज्ञानं कारणमित्यर्थः।१४९।द्वेषं निरूपयति॥द्विष्टेति।दुःखोपायविषयकं द्वेषं प्रति
बलवद्द्विष्टसाधनताज्ञानं कारणमित्यर्थः।तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः।प्रयत्नं निरूपयति।प्रवृत्तिरिति प्रवृत्तिर्निवृत्ति

चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा तु या भवेत्॥तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत्।१४८।बलवद्द्विष्टहेतुत्वमतिः स्यात्प्र
तिबन्धिका॥तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते॥१४९॥द्विष्टसाधनताज्ञानं भवेद्द्वेषस्य कारणम्॥प्रवृत्तिश्च निवृत्तिश्च त
था जीवनकारणम्॥१५०॥एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम्॥चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा॥१५१॥

जीवनयोनियत्नभेदात्त्रिविधः प्रयत्न इत्यर्थः।१५०।चिकीर्षेति।मधुविषसंपृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न
प्रवृत्तिरिति भावः।कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वयव्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति।
कार्यताज्ञानं प्रवर्तकमिति गुरवः।तथा हि ज्ञानस्य प्रवृत्तौ जननीयायां चिकीर्षातिरिक्तं नापेक्षितमस्ति।सा च कृतिसाध्यताज्ञानसाध्या॥इच्छा
याः स्वप्रकारप्रकारकधीसाध्यत्वनियमात्॥चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा।तत्र कृतिसाध्यत्वं प्रकारस्तत्प्रकारकं ज्ञानं चिकीर्षायां
तद्द्वारा च प्रवृत्तौ हेतुः।नत्विष्टसाधनताज्ञानं तत्र हेतुः कृत्यसाध्येपि चन्द्रमण्डलानयनादौ प्रवृत्त्यापत्तेः।कृत्यसाध्यताज्ञानं प्रतिबन्धकमि

सिमु ४२

भावहेतुत्वमिति। ननु न कलंजम्भक्षयेदित्यत्र विध्यर्थैकदेशं नञर्थान्वयः। इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वा
दिति चेन्न। तत्र बाधादिष्टसाधनत्वं कृतिसाध्यत्वं च न विध्यर्थः। किंतु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते। अथवा बलवदनि
ष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः। तदभावश्च नञा बोध्यमानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्य
ति। ननु श्येनेनाभिचरन्यजेतेत्यादौ कथं बलवदनिष्टाननुबन्धित्वमर्थः। श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्। न चवै
धत्वान्न निषेध इति वाच्यम्। अभिचारे प्रायश्चित्तोपदेशात्। न च मरणानुकूलव्यापारमात्रं यदि हिंसा तदा खड्गकारस्य कूपकर्तुश्च हिंसकत्वाप
त्तिः। गरललयान्नभक्षणाजन्यमरणे आत्मवधत्वापत्तिश्चेति वाच्यम्॥ मरणोद्देश्यकत्वस्यापि विशेषणत्वात्। अन्योद्देश्यकक्षिप्तनाराचह
तब्राह्मणस्य तु वाचनिकं प्रायश्चित्तमिति चेन्न। श्येनवारणाया दृष्टाद्वारकत्वेन विशेषणात्। अत एव काशीमरणार्थं कृतशिवपूजादेरपिन
हिंसात्वम्। न च साक्षान्मरणाजनकस्यैव हि हिंसात्वं श्येनस्तु न तथा। किंतु तज्जन्यापूर्वमिति वाच्यम्। खड्गघातेन ब्राह्मणो व्रणपाकपरम्परया
मृतेहिंसात्वानापत्तेः॥ केचित्तु श्येनस्य हिंसाफलं न तु मरणं तेन श्येनजन्यखड्गघातादिरूपा हिंसाभिचारपदार्थस्तस्य पापजनकत्वम्। अ
तः श्येनस्य वैधत्वात्पापजनकत्वेपि अग्रिमपापं प्रतिसंधाय संतो न प्रवर्त्तन्त इत्याहुः। आचार्यास्तु आप्ताभिप्रायो विध्यर्थः। पाकं कुर्या इत्यादा
वाज्ञादिरूपेच्छावाचित्ववत्। लिङ्मात्रस्येच्छावाचित्वं लाघवात्। एवं च स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतयाप्तेष्ट इत्य
र्थः। ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमाय प्रवर्त्तते। कलंजभक्षणे तदभावान्न प्रवर्त्तते। यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधि
रेवतावज्जैमिनि इव श्रुतिकुमार्याः उं योगेमानम्॥ न च कर्तृस्मरणं बाधकम्। कपिलकणादादिभिरद्यपर्यन्तं कर्तृस्मरणस्यैव प्रतीयमानत्वा राम॰
त्। अन्यथा स्मृतीनामप्यकर्तृकत्वापत्तेः। तन्नैव कर्तृस्मरणमस्तीति चेद्देहेदेपि छन्दांसि जज्ञिरे तस्मादित्यादि कर्तृस्मरणमस्त्येव। स्वं प्रति ४२

मन्वन्तरं चैषा श्रुतिरन्या विधीयते इत्यपि द्रष्टव्यम्। स्वयंभूरेष भगवान्वेदो गीतस्त्वया पुरा। शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारका इति तु वेदस्य स्तुतिमात्रम्। न च पौरुषेयत्वे भ्रमादिसम्भवात् अप्रामाण्यं स्यादिति वाच्यम् नित्यसर्वज्ञत्वेन निर्दोषत्वात्। अत एव पुरुषान्तरस्य भ्रमादिसम्भवान्न कपिलादेरपि कर्तृत्वं वेदस्य। किं च वर्णानामेवानित्यत्वस्य व्यवस्थापितत्वात्तत्तदानुपूर्वीसन्दर्भस्य वेदस्यानित्यत्वमिति संक्षेपः। १५१॥ उपादानस्येति॥ उपादानस्य समवायिकारणस्याध्यक्षम् प्रत्यक्षं। प्रवृत्तौ कारणमिति॥ निवृत्तिरिति। द्विष्टसाधनताज्ञानस्य निवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति भावः। १५२। यत्न इति। जीवनयोनियत्नो यावज्जीवनमनुवर्त्तते स चातीन्द्रि-

उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्॥ निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः॥१५२॥ यत्नो जीवनयोनिस्तु सर्वदातीन्द्रि-
यो भवेत्॥ शरीरप्राणसंचारे कारणं संप्रकीर्तितः॥ १५३॥ अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत्॥ अनित्ये तदनित्यं स्या-
न्नित्ये नित्यमुदाहृतम्॥ १५४॥ तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि॥ सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् १५५
सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः॥

यः॥ तत्र प्रमाणमाह॥ शरीर इति॥ प्राणसंचारो हि प्रयत्नसाध्यः॥ इत्थं च प्राणसंचारस्य सर्वस्य यत्नसाध्यत्वानुमानात्। प्रत्यक्षप्रयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः स एव जीवनयोनियत्नः ॥१५३॥ गुरुत्वं निरूपयति। अतीन्द्रियमिति॥ अनित्य इति॥ अनित्ये द्व्यणुकादौ। तद्गुरुत्वमनित्यं। नित्ये। परमाणौ नित्यं गुरुत्वमित्यनुवर्त्तते॥ तद्गुरुत्वम् असमवायि। असमवायिकारणम्॥ १५४॥ तदेवेति। पतनाख्य इति। आद्यपतने इत्यर्थः। द्रवत्वं निरूपयति। सांसिद्धिकमिति॥ द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकं चेत्यर्थः॥ १५५॥ द्वितीयं नैमित्तिकम्॥ परमाणाविति॥ जलपरमाणोर्द्रवत्वं नित्यमित्यर्थः॥

४३ त्वज्ञानादितिवाच्यम्॥ उत्कटरागादिना नरकसाधनताधीतिरोधानात्। दृष्टादौ तु कृतिसाध्यताज्ञानाभावान्न चिकीर्षा प्रवृत्ती। किंत्विष्टसाध
नताज्ञानादिच्छामात्रम्॥ कृतिश्च प्रवृत्तिरूपा बोध्या। तेन जीवनयोनियत्नसाध्ये प्राणपञ्चकसंचारे न प्रवृत्तिः। इत्थं च प्रवर्तकत्वानुरोधा
द्विधेरपीष्टसाधनत्वादिकमर्थः॥ इत्थं च विश्वजिता यजेतेत्यादौ यत्र फलं न श्रूयते तत्रापि स्वर्गः फलं कल्प्यते। नन्वहरहः सन्ध्यामुपासीतेत्या
दाविष्टानुत्पत्तेः प्रवृत्तिः कथम्॥ न चार्थवादिकं ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम्। तथा सति काम्यत्वे नित्यत्वहान्यापत्तेः। काम
नाभावे चाकरणापत्तेः। इत्थं च यत्र फलश्रुतिस्तत्रार्थवादमात्रमिति चेन्न॥ ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरप्य
विरोधात्। न च कामनाभावेऽकारणतापत्तिः॥ त्रिकालस्तवपाठादाविव कामनासद्भावस्यैव कल्पनात्॥ ननु वेदबोधितकार्यताज्ञानात्प्रवृत्तिरि
ति सम्भवति। स्वेष्टसाधनत्वमज्ञायतादृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसम्भवात्॥ यदपि पण्डापूर्वं फलमिति तदपि न। कामनाभावेऽकरण
तापत्तेस्तौल्यात्कामनाकल्पने त्वार्थवादिकं फलमेव रात्रिसत्रन्यायात्कल्प्यताम्॥ अन्यथा प्रवृत्त्यनुपपत्तेः। तेनानुत्पत्तिं प्रत्यवायस्यान्ये मन्य
न्ते। एवं सन्ध्यामुपासते ये तु सततं शंसितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्। एवं दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन् इति प्री
त्यात्मकमेव फलमस्तु॥ न च पितृप्रीतिः कथं फलं व्यधिकरणत्वादिति वाच्यम्। गयाश्राद्धादाविवोद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य क्वचि
त्कल्पनात्॥ अत एवोक्तं शास्त्रदर्शितं फलमनुष्ठानकर्तरीत्युत्सर्ग इति॥ पितॄणां मुक्तत्वे तु स्वस्य स्वर्गादि फलम्। यावन्नित्यनैमित्तिकानु
ष्ठानस्य सामान्यतः स्वर्गजनकत्वात्। पण्डापूर्वार्थं प्रवृत्तिश्च न सम्भवति। न हि तत्सुखं दुःखाभाववत्स्वतः पुरुषार्थः। न वा तत्साधनम्। प्रत्य
वायानुत्पत्तौ कथं प्रवृत्तिरिति चेत्। इत्थमायथा हि। नित्ये कृते प्रत्यवायाभावस्तिष्ठति। तदभावे तदभावः। एवं प्रत्यवायाभावसत्त्वे दुःखप्रा
गभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणतया दुःखप्रागभावं प्रत्यपि स्त्रुवत्त्वात्। एवमेव प्रायश्चित्तस्यापि दुःखप्राग



सि॰मु॰ ति चेन्न॥ तदभावापेक्षया कृतिसाध्यत्वज्ञानस्य लघुत्वात्॥ तच्चद्वयोरेव हेतुत्वं गौरवात्। ननु तन्मतेपि मधुविषसंपृक्तान्नभोजने चैत्यवन्दने
४२ च प्रवृत्त्यापत्तिः कार्यताज्ञानस्य सत्वादिति चेन्न। स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रवर्त्तकत्वात्॥ काम्ये हि पाकयागा
दौ कामनापि विशेषणं। ततश्च बलवदनिष्टाननुबन्धिकाम्यसाधनताज्ञानेन कार्यताज्ञानं ततश्च प्रवृत्तिः। न तु मधुभोजनेन प्रवर्त्तते तदानीं
कामनायाः पुरुषविशेषणत्वाभावात्॥ नित्ये च शौचादिकं पुरुषविशेषणं तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात्तत्र प्रवृत्तिः। ननु त
दपेक्ष्य या लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानत्वेनैव हेतुत्वमस्तु बलवदनिष्टाननुबन्धित्वं चेष्टोत्पत्तिना
नरीयकदुःखाधिकदुःखाजनकत्वं बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न। इष्टसाधनत्वकृतिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्। सा
ध्यत्वसाधनत्वयोर्विरोधित्वात्॥ असिद्धस्य हि साध्यत्वं सिद्धस्य च साधनत्वं न चैकमेकेनैकदा सिद्धमसिद्धं चेति ज्ञायते॥ तस्मात्कालभेदादुभयं
ज्ञायत इति मैवम्। लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य तत्र हेतुत्वात्। न च साध्यत्वसाधनत्वयोर्विरोधः।
यदा कदाचित्साध्यत्वसाधनत्वयोरविरोधादेकदा साध्यत्वसाधनत्वयोश्च ज्ञानात्। न व्यारूढममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्त्तकमना
गतेतस्य ज्ञातुमशक्यत्वात्। किन्तु यादृशपुंसः कृतिसाध्यं पदृष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्त्तते॥ तेनौदनकामस्य तत्साधनता
ज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यः तादृशश्चाहमिति। प्रतिसन्धाय पाके प्रवर्त्तत इत्याहुः। तन्न॥ स्वकल्पितलिप्यादिप्रवृत्तौ
यौवने कामोद्रेकादिना संभोगादौ च तदभावात्। इदं तु बोध्यम्। इदानीं तनेष्टसाधनत्वादिज्ञानं प्रवर्त्तकम्। तेन भाविर्यौवराज्ये बालस्य न
प्रवृत्तिः। इदानीं कृतिसाध्यत्वाज्ञानात्॥ एवं तृप्तस्य भोजनेन प्रवर्त्तते इदानीमिष्टसाधनत्वाऽज्ञानात्। प्रवर्त्तते च रोषदूषितचित्तो विषादि राम॰
भक्षणे इदानीं बलवदनिष्टाननुबन्धित्वज्ञानात्। न चास्तिकस्यागम्यागमनशत्रुवधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्वबुद्धिर्नरकसाधन ४२

दात्। तत्रासद्विपक्षः केवलान्वयी॥ यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्वम्॥ असत्सपक्षः केवलव्यति
रेकी। यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्वादित्यादौ तत्र हि जलादित्रयोदशभेदस्य पूर्वमनिश्चितत्वात् निश्चितसाध्यवतः सपक्षस्याभावात्।
सत्सपक्षविपक्षोऽन्वयव्यतिरेकी यथा वह्निमान् धूमादित्यादौ तत्र सपक्षस्य महानसादेर्विपक्षस्य जलह्रदादेश्च सत्वादिति॥ १४३॥ तत्र
हि व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानं कारणं तदर्थं व्यतिरेकव्याप्तिं निर्वक्ति॥ साध्याभावेति॥ साध्याभावव्यापकीभूताभावप्रतियोगित्वमि
त्यर्थः। अत्रेदं बोध्यम्। यत्संबंधेन यदवच्छिन्नं प्रति येन संबन्धेन येन रूपेण व्यापकता गृह्यते। तत्संबन्धावच्छिन्नप्रतियोगिताकतद्धर्माव
च्छिन्नाभावज्ञानात्॥ तत्संबंधावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति। इत्थं च यत्र विशेषणतासम्बन्धेनेतरत्वव्या

अन्वयव्याप्तिरुक्तैव व्यतिरेकिण्यथोच्यते॥ साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत्॥ १४४

पकत्वं गन्धात्यन्ताभावे गृह्यते। तत्र गन्धाभावाभावेनेतरत्वात्यन्ताभावः सिद्ध्यति। यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकत्वं गन्धाभा
वस्य गृह्यते। तत्र तादात्म्यसम्बन्धेनेतरस्याभावः सिद्ध्यति। स एवान्योन्याभावः। एवं यत्र संयोगसम्बन्धेन धूमं प्रति संयोगसम्बन्धेन व
ह्नेर्व्यापकता गृह्यते॥ तत्र संयोगसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमा
भावः सिद्ध्यति। अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानं कारणम्॥ केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते॥ न तु व्यति
रेकव्याप्तिज्ञानमपि कारणम्॥ यत्र व्यतिरेकसहचाराद्व्याप्तिग्रहस्तत्र व्यतिरेकीत्युच्यते॥ साध्यप्रसिद्धिस्तु घटादावेव जाता। पश्चात्पृथि
वीत्वावच्छेदेन साध्यत इति वदन्ति॥ १४४॥

मन्वन्तरं चैषा श्रुतिरन्यापि श्रूयते इत्यपि द्रष्टव्यम्। स्वयंभूरेष भगवान्वेदो गीतस्त्वया पुरा। शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाइ
तितु वेदस्य स्मृतिमात्रम्। नच पौरुषेयत्वे भ्रमादिसम्भवात् अप्रामाण्यं स्यादिति वाच्यम् नित्यसर्वज्ञत्वेन निर्दोषत्वात्। अतएव पुरुषान्तरस्य
भ्रमादिसम्भवान्न कपिलादेरपि कर्तृत्वं वेदस्य। किंच वर्णानामेवानित्यत्वस्य व्यवस्थापितत्वात्तद्रचितसन्दर्भस्य वेदस्यानित्यत्वमिति सं
क्षेपः। १५१॥ उपादानस्येति॥ उपादानस्यासमवायिकारणस्याध्यक्षम् प्रत्यक्षं। प्रवृत्तेः कारणमिति॥ निवृत्तिरिति। द्विष्टसाधनताज्ञान
स्य निवृत्तिं प्रति जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमितिभावः। १५२। यत्न इति। जीवनयोनियत्नो यावज्जीवनमनुवर्तते स चातीन्द्रि

उपादानस्य चाध्यक्षं प्रवृत्तेर्जनकं भवेत्॥ निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः॥१५२॥ यत्नो जीवनयोनिस्तु सर्वदातीन्द्रि
यो भवेत्॥ शरीरे प्राणसंचारे कारणं स प्रकीर्तितः॥ १५३॥ अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत्॥ अनित्ये तदनित्यं स्या
न्नित्ये नित्यमुदाहृतम्॥ १५४॥ तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि॥ सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् १५५
सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः॥

यः॥ तत्र प्रमाणमाह॥ शरीर इति॥ प्राणसंचारो हि प्रयत्नसाध्यः। इत्यतश्च प्रा
णसंचारस्य सर्वस्य यत्नसाध्यत्वानुमानात्। प्रत्यक्षप्रयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः स एव जीवनयोनिर्यत्नः॥१५३॥ गुरुत्वं
निरूपयति। अतीन्द्रियमिति॥ अनित्येति॥ अनित्ये द्व्यणुकादौ। तद्गुरुत्वमनित्यं। नित्ये। परमाणौ नित्यं गुरुत्वमित्यनुवर्तते॥ तद्गुरु
त्वम् असमवायि। असमवायिकारणम्॥ १५४॥ तदेवेति। पतनाख्य इति। आद्यपतने इत्यर्थः। द्रवत्वं निरूपयति। सांसिद्धिकमिति॥
द्रवत्वं द्विविधं सांसिद्धिकं नैमित्तिकं चेत्यर्थः॥ १५५॥ द्वितीयं नैमित्तिकम्॥ परमाणाविति॥ जलपरमाणौ द्रवत्वं नित्यमित्यर्थः॥

सि॰मु॰ अन्यत्रपृथिवीपरमाण्वादौजलद्व्यणुकादौचद्रवत्वमनित्यम्॥१५६॥कुत्रचित्तेजसिकुत्रचित्पृथिव्यांचनैमित्तिकंद्रवत्वंतत्रकोवानैमि

४४ त्तिकार्थस्तद्दर्शयति॥नैमित्तिकमिति॥वन्हीति।अग्निसंयोगजन्यंनैमित्तिकंद्रवत्वं।तच्चसुवर्णादिरूपेतेजसिघृतजतुप्रभृतिपृथिव्यांच

तिं वर्तत इत्यर्थः।द्रवत्वमि।हेतुरिति।असमवायिकारणमित्यर्थः।संग्रहेसक्तुकादिसंयोगविशेषात्तद्द्रवत्वं।स्नेहसहितमित्तिवास्वयं।तेन

द्रुतसुवर्णादीनांनसंग्रहः॥१५७॥स्नेहंनिरूपयति।जलइति।जलएवेत्यर्थः।असौ।स्नेहः।ननुपृथिव्यामपितैलेस्नेहउपलभ्यते।नचासौज

लीयस्तथासतिदहनप्रातिकूल्यप्रसंगादतआह।तैलांतरइति।तत्प्रकर्षात्।स्नेहप्रकर्षात्तैलेउपलभ्यमानःस्नेहोपिजलीयएवतस्यप्रकृ

परमाणौजलेनित्यमन्यत्रानित्यमुच्यते॥१५६॥नैमित्तिकंवन्हियोगात्तपनीयघृतादिषु॥द्रवत्वंस्यन्दनेहेतुर्निमित्तंसं

ग्रहेतुतत्॥१५७॥स्नेहोजलेसनित्योणावनित्योवयविन्यसौ॥तैलांतरेतत्प्रकर्षाद्दहनस्यानुकूलता॥१५८॥संस्कारभे

दोवेगोथस्थितिस्थापकभावने॥मूर्त्तमात्रेतुवेगःस्यात्कर्म्मजोवेगजःक्वचित्॥१५९॥स्थितिस्थापकसंस्कारःक्षितौके

चिच्चतुर्ष्वपि॥अतीन्द्रियोसौविज्ञेयःक्वचित्स्पन्देपिकारणम्॥१६०॥ \\ ष्टत्वाद्दहनानुकूल्यम्।अपकृष्टस्नेहंहिजलंवन्हिंनाश

यतीतिभावः॥१५८॥संस्कारंनिरूपयति।संस्कारभेदइति।वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविधइत्यर्थः॥मूर्त्तमात्रइति।कर्म

जवेगजभेदाद्वेगोद्विविधइत्यर्थः।शरीरादौहिनोदनजनितेनकर्मणावेगोजन्यते।तेनचपूर्वकर्मनाशस्ततउत्तरकर्मएवमग्रेपिविनाच राम

वेगंकर्मणःप्रतिबंधकत्वात्पूर्वकर्मनाशउत्तरकर्मोत्पत्तिश्चनस्यात्।यत्रचवेगवताकपालेनजनितेघटेवेगोजन्यतेसवेगजोवेगः॥१५९॥ ४४

स्थितिस्थापकेति।अतीन्द्रियइति॥आकृष्टशाखादीनांपरित्यागेपुनर्गमनस्य।स्थितिस्थापकसाध्यत्वात्।क्वचिदिति॥चतुर्षु।क्षित्या

दिषु स्थितिस्थापकं केचिन्मन्यंते तदप्रमाणमिति भावः। असौ स्थितिस्थापकः। क्वचिदाकृष्टशाखादौ। १६०। भावनाख्य इति॥ तस्य सं
स्कारस्योपेक्षात्मकज्ञानात्संस्कारानुत्पत्तेरुपेक्षानात्मक इत्युक्तं तत्संशयात्तस्यानुत्पत्तेर्न्निश्चय इत्युक्तं नेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्र
तिहेतुतेति भावः। ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्षादिस्थले न स्मरणम्। इत्थञ्च संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्ति
चेन्न। विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वे हेतुतायाः सिद्धत्वात्। किंचोपेक्षास्थले संस्कारकल्पनायां गुरुत्वात्सं
स्कारं प्रति उपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात्। १६१। असौ संस्कारः। तत्र प्रमाणं दर्शयति। स्मरण इति। यतः स्मरणं प्रत्यभिज्ञानं च जनयत्यतः
संस्कारः कल्प्यते॥ विना व्यापारं पूर्वानुभवस्य स्मरणादिजननाऽसामर्थ्यात्। स्वस्वव्यापारान्यतराभावे कारणत्वासंभवात्। नच प्रत्यभि

भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः॥ उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत्॥ १६१॥ स्मरणे प्रत्यभिज्ञायामप्य
सौ हेतुरुच्यते॥ धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनं॥ १६२॥ गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः॥ ९ ज्ञां प्रति तत्त्

त्संस्कारस्य हेतुत्वे प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम्। अप्रयोजकत्वात्। परे त्वनुद्बुद्धसंस्कारात्प्रत्यभिज्ञानुदयादुद्बु
द्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः॥ अदृष्टं निरूपयति। धर्मेति। स्वर्गादीति। स्वर्गादिसकल
सुखानां स्वर्गसाधनीभूतशरीरादीनां च साधनं धर्म इत्यर्थः १६२। तत्र प्रमाणं दर्शयितुमाह। गङ्गास्नानेति॥ यागादिव्यापारतया हि धर्मः क
ल्प्यते॥ अन्यथा यागादीनां चिरंविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात्। तदुक्तमाचार्यैः। चिरध्वस्तं फलाया
लं न कर्मातिशयं विनेति। ननु यागध्वंस एव व्यापारः स्यात्। न च प्रतियोगितत् ध्वंसयोरेकत्राजनकत्वं। सर्वत्र तथात्वे मानाभावात्। नचत्व

सि॰मु॰ म्मनेफलानन्त्यंमन्मतेचरमफलस्यापूर्वंनाशकत्वान्नतथात्वमितिवाच्यम्।कालविशेषस्यसहकारित्वादित्यतआह।गङ्गास्नानेति।गङ्गास्ना
४५ नस्यहिस्वर्गजनकत्वेऽनंतानांजलसंयोगध्वंसानांव्यापारत्वमपेक्ष्यैकमपूर्वमेवकल्प्यतेलाघवादितिभावः।ननुध्वंसोपिनव्यापारोस्तु।
नचनिर्व्यापारस्यचिरध्वस्तस्यकथंकारणत्वमितिवाच्यम् अनन्यथासिद्धनियतपूर्ववर्त्तित्वस्यतत्रापिसत्त्वात्॥अव्यवहितपूर्ववर्त्तित्वं
हिचक्षुःसंयोगादेःकारणत्वं ननुसर्वत्रकार्यंकार्यकालवर्त्तित्वमिवसमवायिकारणस्यकारणत्वे इत्यतआह।कर्मनाशेति।यदिहि अपूर्वं
नस्यात्तदाकर्मनाशाजलस्पर्शादिनानाश्यत्वंधर्मस्यनस्यात्।नहितेनयागादेर्नाशःप्रतिबंधोवाकर्तुंशक्यतेतस्यपूर्वमेवनष्टत्वादितिभावः।
एतेनदेवताप्रीतेरेवफलत्वमित्यपास्तम्।गङ्गास्नानादौसर्वत्रदेवताप्रीतेरसंभवाच्चदेवतायाश्चेतनत्वेपितत्प्रीतेरनुद्देश्यत्वात्।प्रीतेःसुखरूपत्वे

कर्मनाशाजलस्पर्शादिनानाश्यस्त्वसौमतः॥१६३॥अधर्मोनरकादीनांहेतुर्निंदितकर्मजः॥प्रायश्चित्तादिनाश्योसौजीववृत्तीत्विमौगुणौ।
१६४एतौतुवासनाजन्यौज्ञानादपिविनश्यतः॥शब्दोध्वनिश्चवर्णश्चमृदङ्गादिभवोध्वनिः॥१६५॥कंठसंयोगादिजन्यावर्णास्तेकादयोमताः

नविष्णुप्रीत्यादौतदसम्भवात्।जन्यसुखस्यतत्राभावात्।तेनविष्णुप्रीतिजन्यत्वेनपराभिमतस्वर्गादेरेवविष्णुप्रीतिशब्देनलक्ष्यते।अधर्मइति।न
रकादिसकलदुःखानांनारकीयशरीरादीनांचसाधनमधर्मइत्यर्थः।तत्रप्रमाणमाह।प्रायश्चित्तेति।यदित्वधर्मोनस्यात्तदाप्रायश्चित्तादिनानाश्य
त्वंनस्यात् नहितेनब्रह्महननादीनांनाशःप्रतिबंधोवाविधातुंशक्यते तस्यपूर्वमेवनष्टत्वादितिभावः।जीवेति।ईश्वरस्यधर्माधर्माभावादितिभावः।
इमौधर्माधर्मौ।१६४।वासनेति।अतोज्ञानिनाकृतेऽपिसुकृतदुष्कृतकर्मणीनफलायालमितिभावः।ज्ञानादपीति।अपिनाभोगपरिग्रहः।ननुतत्त्वज्ञान
स्यकथंधर्माधर्मनाशकत्वं।नाभुक्तंक्षीयतेकर्मकल्पकोटिशतैरपीतिवचनविरोधात्।इत्थंचतत्त्वज्ञानिनांप्रारब्धेतिकायव्यूहेनसकलकर्मणांभोगेन

क्षयइतिचेन्न।तत्रभोगस्यवेदबोधितनाशकोपलक्षकत्वात्। राम॰ ४५

सि॰मु॰
४६

कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः। तदुक्तं ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे इति। न
नु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादिकं च न स्यात्। ज्ञानेन सर्वेषां कर्मणां नाशादिति चेन्न। प्रारब्धेतरकर्मणामेव नाशात्॥ तत्तच्छरीरभोगज
नकं हि यत्कर्म तत्प्रारब्धं तदभिप्रायमेव नाभुक्तमिति वचनमिति। शब्दं निरूपयति। शब्द इति॥ १६५। नभोवृत्तिः आकाशसमवेतः। दूरस्थशब्दस्याग्र
हणादाह। श्रोत्रेति। १६६। ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह। वीचीति। आद्यशब्देन बहिर्दशदिगवच्छिन्नोऽन्यशब्द
स्तेनैव शब्देन जन्यते तेन चापरस्तद्व्यापकः एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति। कदम्बेति। आद्यशब्दाद्दशदिक्षु दश शब्दा उत्पद्यन्ते तैश्चान्ये दश श

सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते॥ १६६॥ वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता॥ कदम्बगोलकन्यायादुत्पत्तिः कस्य
स्यन्मते॥ १६७॥ उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता॥ सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते। १६८। तदेवौषधमित्यादौ सजा
तीयेऽपि दर्शनात्॥ तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः॥ १६९॥ इति श्रीविश्वनाथपञ्चाननकृतकारिकावली समाप्ता॥ ❖॥

ब्दा उत्पद्यन्ते तैश्चान्ये दश शब्दा उत्पद्यन्ते इति भावः। अस्मिन्मते कल्पनागौरवादुक्तं कस्यचिन्मत इति। १६७। ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसंगतमत आ
ह। उत्पन्न इति। शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः। ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम्। इत्यत उत्पादवि
नाशबुद्धिर्भ्रमरूपैवेत्यत आह। सोऽयमिति। साजात्यमिति। तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वविषयो न तु आद्यन्तयोरभेदो विषयः। उक्तप्रतीतिविरोधात्। इ
त्थञ्च द्वयोरपि प्रतीत्योरभ्रमत्वमिति। ननु सजातीये सोऽयमिति प्रत्यभिज्ञा कुत्र दृष्टेत्यत आह॥ तदेवेति। यदौषधमन्येन कृतं तदौषधं मयापि कृतमित्यादि
दर्शनादिति भावः॥ ॥ इति श्रीमहोपाध्यायविद्यानिवासभट्टाचार्यपुत्रश्रीयुतविश्वनाथपञ्चाननभट्टाचार्यविरचिता सिद्धान्तमुक्तावली समाप्ता॥ ।

॥ श्रीकासीविश्वनाथपुरीमेंवृह्मानालासुधानिवासछापाखानेमेरामकुमारमिश्र
केछापेमेंसिद्धान्तमुक्तावलीछापीगयी लि॰ महीपनारायणपांडे का॰ गणेश जिसै
लेनाहोयउसेचाननीचौकमेकन्हैयामिश्रकेदुकानपरमिलैगा श्रीसम्वत १९२५ मी॰
माघशु॰ ४ ॥







